| | | | | | | |
|---|---|---|---|---|---|---|
| [illegible] | नारायणसारसङ्ग्रहः (नारायणविषयकनाना-पुराणादिविषयसङ्ग्रहः) | शठारिदासः | वैष्णवागमम् | Printed | ” | " |

श्रीमतेरामानुजायनमः॥अथनारायणसारसंग्रहःप्रारभ्यते॥ श्रीरस्तु

श्रीमतेरामानुजायनमः॥ ॥शुक्लांबरधरंविष्णुंशशिवर्णंचतुर्भुजं ।प्रसन्नवदनंध्यायेत्सर्वविघ्नोपशांतये॥१॥ यस्यद्विर
दवक्त्राद्याः पारिषद्याः परःशतम्॥विघ्नंनिघ्नंतिसततंविष्वक्सेनंतमाश्रये॥१॥ बकुलाभरणंवंदेजगदाभरणंमुनिम्॥यःश्रुतेरु
त्तरंभागंचक्रेद्राविडभाषया॥३॥ श्री॥रंगमंगलमहोत्सवचन्द्रनायवेदांतपांथपरमार्थसमर्थनाय॥कैंकर्यलक्षणविलक्षण-
मोक्षलक्ष्म्यैरामानुजोविजयतेयतिराजराजः॥४॥यस्यांघ्रिपद्मशरणागतानांसंसारसिंधोस्तरणैकपोतम्॥दयानिधिंदेहभृ
तांशरण्यंश्रीकृष्णमार्यंशरणंप्रपद्ये॥५॥ वेदेरामायणेचैवभारतेभरतर्षभ॥आदौमध्येतथाचांतेहरिःसर्वत्रगीयते॥६॥श्रुति
स्मृतीतिहासेभ्यःपुराणंधर्मसंहिताम्॥ सर्वतःसारमादायषट्पदःकुसुमेर्यथा॥७॥ ॥पाद्मे॥ ॥वैष्णवंनारदीयंचत-
थाभागवतंशुभम्॥गारुडंचतथापाद्मंवाराहंशुभदर्शने। षडेतानिपुराणानिसात्विकानिमतानिमे॥८॥ ॥पद्मोत्तरखंडे॥
ब्रह्मांडंब्रह्मवैवर्तंमार्कंडेयंतथैवच॥भविष्यंवामनंब्राह्म्यंराजसानिनिबोधमे॥९॥मात्स्यंकौर्म्यंतथालैंगंशैवंस्कांदंतथैवच॥
आग्नेयंचषडेतानितामसानिनिबोधमे॥१०॥तथैवस्मृतयःप्रोक्ताऋषिभिस्त्रिगुणान्विताः॥सात्विकाराजसाश्चैवतामसाःशु
भदर्शने॥११॥वासिष्ठंचैवहारीतंव्यासंपाराशरंतथा॥भारद्वाजंकाश्यपंचसात्विकामोक्षदाःशुभाः॥१२॥ वामनंयाज्ञवल्क्यं
चआत्रेयंदाक्ष्यमेवच॥कात्यायनंवैष्णवंचराजसाःस्वर्गदाःशुभाः॥१३॥गौतमंबार्हस्पत्यंचसांवर्तंचयमस्मृतम्॥सांख्यंचौ
शनसंदेवितामसानिरयप्रदाः॥१४॥सात्विकामोक्षदाःप्रोक्ताःराजसाःस्वर्गदाःशुभाः॥तथैवतामसादेविनिरयप्राप्तिहेतवः

॥१५॥ सात्विकानांपुराणानांस्मृतीनांचैवसर्वश:॥ श्रीवैष्णवहितार्थायक्रियतेसारसंग्रह:॥१६॥ ॥वैष्णवंनामतदुक्तंपाद्मे॥
येकंठलग्नतुलसीनलिनाक्षमालायेबाहुमूलपरिचिन्हितशंखचक्रा:॥ येवाललाटफलकेलसदूर्ध्वपुंड्रास्तेवैष्णवाभुवनमा
शुपवित्रयंति॥१७॥ वैष्णवाद्विविधाप्रोक्ताबाह्याभ्यंतरतस्तथा॥ बाह्यास्तशंखचक्राभ्यांमंतरावीतरागत:॥१८॥ ॥पारा
शरस्मृतौ॥ ॥आद्यंतुशंखचक्रादिधारणंवैष्णवंस्मृतम्॥ पुंड्रनामक्रियाचैवमंत्रंचैवार्चनंहरे:॥ संस्कारा:पंचकर्तव्याब्राह्म
णस्यविधानत:॥ विधिनाशंखचक्रादिधारयेदूर्ध्वपुंड्रकं॥ ॥अत्रचक्रधारणेप्रमाणानिलिख्यंते॥ ॥तत्रादौश्रुति:॥
पवित्रंतेविततंब्रह्मणस्पतेप्रभुर्गात्राणिपर्येषिविश्वत:॥ अतप्ततनुर्नतदामोअश्नुतेश्रुतासइद्वहंतस्तत्समासतइतिश्रुते:॥
देवावोयेरिष्टतेनबाहुनासुदर्शनेनप्रयतमानवोलोकसृष्टिंवितन्वंतिब्राह्मणास्तद्वहंति॥ अग्निनावेतप्तंद्विभुजेधार्यंऊर्ध्वपुंड्र
मालिखेत्॥ तस्माद्धिरेवंभवतिनपुनरागमनमेतिब्रह्मण:सायुज्यंसलोकतामाप्नोतिइतिशतपथब्राह्मणेसामवेदेमैत्रावरुण
शाखायाम्॥ पवित्रमित्यग्नि अग्निर्वैसहस्रार:॥ सहस्रारोनेमिर्नेमिनातप्ततनु:ब्रह्मण:सायुज्यंसालोकतामाप्नोति॥ ॥अथ
र्वणी॥ ॥चक्रंबिभर्तिवपुषाभितप्तंबलंदेवानाममितस्यविष्णो:॥ सएतिनाकंदुरितान्विधूयप्रयातियद्यतयोवीतरागा:॥एभि
र्वयमुरुक्रमस्यचिन्हैरंकितालोकेसुभगाभवाम:॥ तद्विष्णो:परमंपदंयेगच्छंतिलांछिता:॥ चक्रमादायाग्नौप्रतप्यब्राह्मण
स्योत्तरेबाहौधारयेत्॥ ॥बृहदारण्यके॥ ॥निचिक्षेपसुवर्णमभिद्यमानंमध्येबाहुमदधत्सुदर्शनंविष्णोरिदंभूरिदंभू

रितेजः प्रथर्षनिदियानक्तं बिभृयस्त्वज्जनास बव्हृचेषु बाष्कलसंहितायाम् प्रतेविष्णोरस्त्व चक्रेपवित्रेजन्मांभोधिंततर्वेचर्षणींद्राः मूले
बाव्होर्दधतेन्येपुराणालिंगान्यंगेनावकान्यर्पयंति आथर्वणे अग्निनावैहोतारः चक्रंपांचजन्यंस्वतमौहृष्क्रजोधारयेत् आत्महितमाच-
रेत् आचार्यायसन्मुखंप्रपद्येत् तस्माद्वैकुंठोभवति नपुनरागमनमेति सायुज्यंसालोक्यतामाप्नोति चरणंपवित्रंविततंपुराणमित्यार
भ्यस्वधितादथात्वित्यंतं आपस्तंभशाखायांकाठके नारदपंचरात्रे सौवर्णंराजतंताम्रंकांस्यमायसमेवच॥ चक्रंकृत्वातुमेधा-
वीधारयेद्धिविचक्षणः द्वादशारंतुषट्कोणंवलयत्रयसंयुतम् हरेःसुदर्शनंनित्यंधारयेत्तद्विचक्षणः ब्रह्मपुराणे अग्नितप्तंप
वित्रंचधृत्वावैबाहुमूलयोः त्यक्त्वायमपुरंघोरंयातिविष्णोःपरंपदम् वामने लीलयापिलिखेद्यस्तुबाहुमूलेसुदर्शनम् कुल
कोटिंसमुद्धृत्यसगच्छेत्परमांगतिम् मार्कंडेये धारयेद्विष्णुभक्तस्तुचक्रंबाहौतुदक्षिणे वामेतुशंखराजानंवैष्णवंपदमाप्नुयात्
कूर्मे चक्रादिधारणंपुंसांपरसंबंधवेदनम् पातिव्रत्यनिमित्तंहिवलयादिविभूषणम् बृहन्नारदीये सुदर्शनेनयस्यांगलां
छितंतुभवेत्सदा देहेतस्यवसेन्नित्यंश्रियायुक्तःस्वयंहरिः चक्रायुधांकितंदृष्ट्वायमोपिस्वदिशांकितः प्रणामंदूरतःकृत्वाविष्णु
भक्तंविमत्सरम् चक्रांकितायविप्रायविष्णुभक्तायधीमते भिक्षामात्रप्रदानेनवैष्णवींगतिमाप्नुयात् वन्हितप्तेनचक्रेणबाहुमूलेतु
लांछिताः सर्वपापानिसंतीर्यभविष्यंतिसुरोपमाः अग्नितप्तेनचक्रेणबाहुमूलेतुलांछितः रौरवात्कुलमुद्धृत्यविष्णुलोकेमहीय
ते शांडिल्यस्मृतौ पश्वश्वपुत्रादिकंसर्वंगृहोपकरणानिच अंकयेत्शंखचक्राभ्यांनामकुर्याच्चवैष्णवम् स्त्रियासहैवकर्तव्यंगृह

स्थस्यविधानतः संस्कारपंचकंतेनभवेत्साधर्मचारिणी तापादिपंचसंस्कारागृहस्थस्ययथाविधिः आचार्येणसदाकार्याः स्वगृह्योक्त
विधानतः पाराशरस्मृतौ प्रथमंतापसंस्कारंतापसैर्मुनिभिःस्मृतम् सर्वाश्रमेषुवसतांस्त्रीणांचद्विजसत्तमाः अग्नितप्तेनच-
क्रेणबाहुमूलेतुलांछिताः तेयांतिपरमंस्थानंपुनरावर्तिवर्जितम् अग्निनैवतुसंतप्तंचक्रमादायवैष्णवः दाहयेत्सर्ववर्णानांविष्णु-
सालोक्यसिद्धये दक्षिणेतुभुजेविप्रोबिभृयाद्वैसुदर्शनम् सव्येतुशंखंबिभृयादितिवेदविदोविदुः चक्रांकितायविप्रायअभुक्त्वा
न्नंददातियः तदन्नंमेरुतुल्यंस्याद्दशकृतेदिविदेववत् पद्मपुराणे अंकयेत्सचक्राद्यैरात्मनोबाहुमूलयोः कलत्रापत्यभृ
त्येषुपश्वादिषुचसर्वशः स्कांदेनारायणब्रह्मसंवादे चक्रांकितभुजाःसर्वेप्रल्हादेनध्रुवेनच बिभीषणेनबलिनारुक्मांग
दशकेनच मांधात्रात्यंबरीषेणमार्कंडेयमुखैर्बुधैः शंखादिचिन्हितैःसर्वैर्देहंकृत्वाचपुत्रक विष्णुरहस्ये वैष्णवामुनयःस
र्वेविष्णुचक्रेणमुद्रिताः तेषांदर्शनमात्रेणमहापातकनाशनम् अतिपापप्रसक्तोपिविष्णुचक्रांकितस्यतु पादोदकंपिबेद्यस्तु-
सर्वपापैःप्रमुच्यते हारीतस्मृतौ चक्रांकितस्यविप्रस्यपादप्रक्षालितंजलम् पीत्वापातकसाहस्रैर्मुच्यतेनात्रसंशयः यस्मि
न्तीर्थेकृतस्नाना वैष्णवाश्चक्रलांछिताः तस्मिन्स्नानंप्रकुर्वीतविष्णुसालोक्यमाप्नुयात् चक्रांकितस्यसामीप्येतपःकुर्यात्प्रयत्न
तः स्नानंदानंजपोहोमस्तत्सर्वंचाक्षयंभवेत् शरीरंदृश्यतेयस्यविष्णुचक्रेणलांछितम् गंगाजलामलंमन्येदेहंतत्पापवर्जितम्
विष्णुचक्रांकितोविप्रोभुंजानोपियतस्ततः नलिप्यतेसपापेनतमसेवप्रभाकरः चक्रांकितभुजंविप्रंयोभूम्यामभिवादयेत् ल-

क

लाटेपांसुसंख्यानिविष्णुलोकेमहीयते अविद्योवासविद्योवाशंखचक्रोर्ध्वपुंड्रधृक् नृणांहंतिसमस्ताघंतमःसूर्योदयेयथा दि
ष्णुचक्रांकितंविप्रमेकरात्रंतुवासयेत् विष्णुलोकेनिवासेतुपूज्यएवनसंशयः विष्वक्सेनसंहितायाम् शरीरेयस्यकस्या-
पिदृश्यतेवैसकृद्दर्शनम् तस्मैकुर्वीतपक्षींद्रनमस्कारान्प्रयत्नतः चक्रांकितायविप्रायजलान्नंप्रददातियः तदन्नंमेरुतुल्यंस्या
त्तज्जलंचार्णवोपमम् अभ्यंगनादियुक्तंयःकरोतिसमाहितः चक्रांकितायविप्रायविष्णुसालोक्यमाप्नुयात् मोक्षधर्मे
सगोत्रमपियःश्राद्धेचक्रांकितंभुजंचरेत् रौरवात्कुलमुद्धृत्यविष्णुलोकेमहीयते पाद्मे कृष्णायुधांकितोमर्त्योयत्रयत्रा
वतिष्ठति स्मशानमपितत्तीर्थंकिंपुनःपुण्यभूमयः किंकरिष्यतिलोकेस्मिन्प्रयागमरणादिकम् चक्रांकितशरीरस्यगृहेषु
क्तिःकरेस्थिता यस्यांतकालेदेहेतुलांछनंजायतेहरेः दृष्ट्वातंप्रलयंयातियमेनसहकिंकराः चक्रांकितध्वजेप्रायःसन्मानंक्रि
यतेयदि प्रयागेयागतिःप्रोक्तासागतिस्तस्यनारद चक्रांकितायविप्रायकन्यादानंकरोतियः परमानंदमाप्नोतितद्विष्णोःपरमं
पदम् विष्णुचक्रांकितंदृष्ट्वायोभ्युत्थायकृतांजलिः स्वकुलंससमुद्धृत्यविष्णुलोकेमहीयते चक्रांकितभुजायेतुपंक्तिमध्ये
तुभुंजते सापंक्तिःस्वर्गमध्येचदेवपंक्तिषुपूज्यते शंखचक्रांकितंविप्रंदृष्ट्वायोल्हादितोभवेत् परमंपदमाप्नोतिकिंपुनरे
हिकंफलम् चक्रांकितस्यनामानियोवदेद्भक्तिमान्नरः सर्वपातकनिर्मुक्तोसयातिपरमंपदम् विष्णुचक्रांकितोविद्वान्यस्मि
न्देशेवसेत्सुखम् सदेशोमत्प्रियःपुण्योवैष्णवानामपिप्रिये भविष्येभगवद्वाक्यम् योनरोममभक्तस्तद्व्यचिन्हा-

निधारयेत् श्वपाकोवाथगोघ्नोवायमलोकंसगच्छति ब्रह्मांडपुराणे नारायणायुधैर्नित्यंचिन्हितोयस्यविग्रहः पा
पकोटिशतंदग्धंतस्मिन्दृष्टेभवेत्सदा शंखचक्रोर्ध्वपुंड्रादिधारयेद्ब्राह्मणः सदा श्राद्धादिसर्वकर्मार्हइत्युक्तंकिमतःपरम्
शिल्पशास्त्रे भुजेचक्रंद्विजातीनांशिरश्चक्रंतुदैवतम् अचक्रद्विजदेवानांपूजादानंचनिष्फलम् वाराहे चक्रांकित
भुजाविप्रायत्रयत्रवसंतिहि योजनानितथात्रीणिममक्षेत्रंवसुंधरे अश्वमेधसहस्राणिवाजपेयशतानिच तत्फलंलभ्य
तेतस्यमदीयायुधधारणात् निवसंतिमहात्मानोयत्रचैकांतिनोद्विजाः देवताऋषयोनित्यंतद्देशंपर्युपासते इतिच·
क्रांकनोत्कर्षम् अथतद्रहितानांनिंदा तदुक्तंभविष्ये चक्रांकितभुजंदृष्ट्वायस्तुतन्नाभिवादयेत् तिर्यग्योनिश
तंप्राप्यविष्ठायांजायतेकृमिः यज्ञोदानंतपोहोमंभोजनंपितृतर्पणम् चक्रलांछनहीनस्यविप्रस्यविफलंभवेत् तीर्थस्ना
नफलंनास्तिभूगोदानफलंतथा अवैष्णवस्यविप्रस्यसर्वंशश्वद्विनश्यति रूपलावण्यसंयुक्तामहावंशोद्भवाद्विजाः
अवैष्णवानशोभंतेनिर्गंधाइवकिंशुकाः विद्याविनयसंपन्नाविशालकुलसंभवाः विष्णुभक्तिविहीनायेचांडालसदृ·
शाःस्मृताः हरिवंशेरुद्रवाक्यम् सर्वभूतदयायुक्तंवैष्णवंद्वेष्टियोनरः सचांडालोमहापापीरौरवंनरकंव्रजेत् ब्र
ह्महत्यासुरापानंस्तेयंगुर्वंगनागमः चक्रांकितस्यनिंदाचपंचैतेत्वतिपातकाः पाराशरस्मृतौ विनायज्ञोपवीतेन ३
विनाचक्रस्यधारणात् विनाद्वयेनवैविप्रश्चांडालत्वमवाप्नुयात् शंखचक्रोर्ध्वपुंड्रादिरहितोब्राह्मणाधमः सजीवन्नेव

अवैष्णवत्वमापन्नानरकंयांतिनिश्च-
वचांडालः सर्वधर्मबहिष्कृतः हारीते अचक्रधारिणोविप्राः सर्वधर्मस्यगर्हिताः अवैष्णवत्वमापन्नानरकंयांतिनिश्च-
यम् चक्रचिन्हादिरहितंप्राकृतंकलुषान्वितम् अवैष्णवंतुतद्दूरात्श्वपाकमिवसंत्यजेत् पद्मपुराणे संलापादर्शना
द्दानाद्यजनाद्वंदनादपि चक्रांकितस्यविप्रस्यविष्णुसायुज्यमाप्नुयात् नथैवचक्रहीनस्यपूजनाद्वंदनादपि वैष्णवोनिर
यंयातियावदाभूतसंप्लवम् अचक्रधारिणंविप्रंश्रुतिस्मृतिसमन्वितम् त्यजेच्चांडालभांडस्थंतंविप्रममृतंयथा सनत्कु
मारसंहितायाम् कृष्णायुधांकितोभूत्वापितृकार्यंकरोतियः तस्सर्वंप्रतिगृण्हातिगयायांचगदाधरः कृष्णमुद्रांकि
तोयस्तुदैवंपित्र्यंकरोतियः नित्यनैमित्तिकंवापिप्रत्यहंचाक्षयंभवेत् चक्रांकितभुजोभुंक्ते यस्यांपंक्तौद्विजोत्तमाः पुना
तिसकलांपंक्तिंगंगेवोत्तरवाहिनी श्राद्धकालेप्रणश्यंतिभीतादानवराक्षसाः शंखचक्रगदापद्मंदृष्ट्वाकर्तुश्चविग्रहे ना
रदीये श्रीकृष्णशस्त्रांकितहीनगात्रःस्मशानतुल्यःपुरुषोथनारी दृष्ट्वानरस्तंनृपतेसवासाःस्नात्वासमर्चेद्धरिमंगनि
त्यं चक्रचिन्हविहीनंतुयःश्राद्धेभोजयिष्यति व्यर्थंभवतितत्सर्वंनिराशाःपितरोगताः पाराशरे अचक्रधारिणंविप्रं
यःश्राद्धेभोजयिष्यति रेतोमूत्रपुरीषादिपितृभ्यःसप्रयच्छति तस्माच्चक्रंविधानेनतप्तंवैधारयेद्द्विजः इत्यादिश्रुतिभिःप्रो
क्तंविष्णोश्चक्रस्यधारणम् तस्माच्चक्रादिसंस्काराःकर्तव्यामुनिसत्तमाः चक्रलांछनहीनेनकृतंकर्मचनिष्फलम् स्नात्वा-
ऽभोन्हिपूर्वाण्हेसम्यगभ्यर्च्यकेशवम् स्नातंशिष्यंसमाहूयकृतकौतुकमंगलम् आचार्योविधिवत्कुर्यात्चक्रपुंड्रादिसंक्रि

याः पुरतोग्निंप्रतिष्ठाप्यस्वगृह्योक्तविधानतः इतिश्रीसारसंग्रहेचक्रधारणमाहात्म्यंप्रथमसंस्कारः १ अथपुंड्रधारणवि
लिख्यते तत्रादौश्रुतिः कठवल्यामूर्ध्वपुंड्रविधिः धृतोर्ध्वपुंड्रः कृतचक्रधारी विष्णुंपरंध्यायतियोमहात्मा स्वरेणमंत्रेण
सदाहृदिस्थितंपरात्परंयन्महतोमहान्तम् महोपनिषदि धृतोर्ध्वपुंड्रःपरमेशितारंनारायणंसांख्ययोगाधिगम्यम् स्मृ
त्वाविमुच्येतनरोसमस्तैःसंसारपाशैरिहचैवविष्णुः अथर्वणे हरेःपादाकृतिमात्मनोहितायमध्येछिद्रंऊर्ध्वपुंड्रंयोधार
यतिसपरस्यप्रियोभवतिसपुण्यवान्भवतिसमुक्तिवान्भवति तदुक्तंपाद्मे ऊर्ध्वपुंड्रस्यमाहात्म्यंवक्ष्यामिशृणुदर्शने धा
रणादेवमुच्येतभवबंधाद्विमूढधीः एकांतिनोमहाभागाःसर्वेममहितेरताः सांतरालंप्रकुर्वीतऊर्ध्वपुंड्रंपदाकृतिः पुंड्राणांधा
रणार्थायगृह्णीयात्श्वेतमृत्तिकां श्रीरंगेवृषभौचश्री कूर्मेयादवाचले प्रयागेनारसिंहाद्रौवाराहेतुलसीवने द्वारवत्यांशृ
ंगेरम्येवासुदेवह्रदेतथा सिंधुतीरेचवल्मीकेहरिक्षेत्रेविशेषतः विष्णोःपादोदकंयत्रप्रवाहयतिनित्यशः गृहीत्वामृत्तिकांभ
क्त्याविष्णुपादजलैःसह धृत्वापुंड्राणिचांगेषुविष्णुसायुज्यमाप्नुयात् ललाटेकेशवंध्यायेत्नारायणमथोदरे वक्षस्थलेमा
धवंचगोविंदंकंठकूबरे विष्णुंचदक्षिणेकुक्षौबाहौचमधुसूदनम् त्रिविक्रमंकंधरेतुवामनंवामपार्श्वके श्रीधरंवामबाहौतु
हृषीकेशंतुकंधरे पृष्ठेतुपद्मनाभःस्यात्त्रिकेदामोदरंन्यसेत् तत्प्रक्षालनतोयेनवासुदेवेतिमूर्धनि तत्तत्पुंड्राणितन्मूर्तिंध्या
त्वामंत्रेणधारयेत् ललाटेभुजयुग्मेतुपृष्ठयोःकंठकूबरे धारयेदूर्ध्वपुंड्राणिचतुरंगुलमायतः कुक्षौतत्पार्श्वयोः प्रोक्तेमाय-

तंतुदशांगुलम् बाह्वोर्वक्षस्थले पुंड्रमष्टांगुलमुदाहृतम् एवंद्वादशपुंड्राणि ब्राह्मणः सततं धरेत् अंतरालेषु सर्वेषु हरिद्रां धार
ये।च्छ्रियम् ब्रह्मरात्रे श्रीप्रणवेनैव मंत्रेण मृदा वै मामनुस्मरन् ललाटे धारयेन्नित्यं विष्णुसालोक्यमाप्नुयात् योन धार-
यते मर्त्यो मामकं चिन्हमीदृशम् तं त्यजामि दुरात्मानं मदीयाज्ञातिलंघनम् व्यालं दृष्ट्वा यथा लोके दर्दुरा भयकंपिताः ऊर्ध्व-
पुंड्रांकितं तद्वत् कंपंते यमकिंकराः ऊर्ध्वपुंड्रेण संयुक्तो म्रियते यस्तु मानवः चांडालोपि विशुद्धात्मा विष्णुलोके महीयते केव-
लस्योर्ध्वपुंड्रस्य धारणादपि मानवः देहजैः पापसंघातैर्मुच्यते नात्र संशयः स्कंदपुराणे चतुरांगुलमूर्ध्वाग्रं द्व्यंगुल-
विस्तृतं मृदा मृदा पुंड्रं द्विजः कुर्यात् सांतरालं मनोहरं द्व्यंगुलं त्र्यंगुलं वापि मध्ये छिद्रं प्रकल्पयेत् द्व्यंगुलं पार्श्वमेकं तु ऊ-
र्ध्वपुंड्रस्य लक्षणम् भारद्वाजसंहितायाम् आचम्य धारयेत्पुंड्रान् मृदा शुभ्रेण पूर्ववत् नासिकामूलमारभ्य आकेशां
तं प्रकल्पयेत् नासिकायास्त्रयो भागा नासिकामूलमिष्यते हारिद्रेण तु चूर्णेन कुंकुमेन सुगंधिना ऊर्ध्वपुंड्रस्य मध्ये तु लक्ष्मी
स्थानं प्रकल्पयेत् अत्रिस्मृतौ ततो दिव्यं च हारिद्रं समोदं तुलसीदलम् मंत्रेण धारयेच्चूर्णं पुंड्रेषु द्वादशेषु च ऊर्ध्वपुंड्र
स्य मध्ये तु दिव्यचूर्णं च धारयेत् श्रीकरं विजयं पुण्यं सर्वदोषप्रणाशनं ऊर्ध्वपुंड्रस्य मध्ये तु रजनीचूर्णमुत्तमम् लक्ष्मीरूप
धरं नित्यं अन्यद्द्रव्यं न धारयेत् विष्णुरूपेण संस्पृष्टं तच्चूर्णं शिरसा वहेत् तस्याः शुभानि नश्यंति पुण्यमार्गो भवेन्नरः स
नत्कुमारसंहितायां ऊर्ध्वपुंड्रं मृदा धार्यं सच्छिद्रं सौम्यमेव च तदलंकरणार्थाय हरिद्रां धारये।च्छ्रियम् विलोक्य दर्प-

णांविद्वानूर्ध्वपुंड्रंमनोहरं कुर्यान्मंगलमाकांक्षन् हरिद्राचूर्णसंयुतम् पंचरात्रे नरूवर्णादिभिःकुर्यान्नदार्वंबिल्वमेव
वा नारिकेलफलस्यैवश्रीचूर्णपात्रमुच्यते कृत्वाकरंडबिल्वस्यफलेपक्केमनोहरे हारिद्रंपूरयेच्चूर्णंधारयेद्विष्णुप्रीतये
विष्णुगात्रात्परिभ्रष्टंतच्चूर्णंतुललाटके ब्रह्महत्यादिकोदोषस्तत्क्षणादेवनश्यति पंचरात्रे ऊर्ध्वपुंड्रस्यमध्येतुत्वन्य
द्रव्यंनधारयेत् विष्णुबिंबेनसंस्पृष्टंहरिद्रांधारयेद्विजः हारिद्रेणतुचूर्णेनस्नापितेमधुसूदने ललाटेतत्तुयोधृत्वाब्र
ह्मलोकेमहीयते अत्रिस्मृतौ देवदेवांगसंस्पृष्टंचूर्णंपात्रेप्रगृह्यच हारिद्रचूर्णंभक्तेभ्योविप्रादिभ्यःप्रदीयतां वि
ष्णुधर्मोत्तरे अभिषिक्तंतुयच्चूर्णंविष्णुबिंबेतुयोनरः हरिद्रांधारयेन्नित्यंअश्वमेधफलंलभेत् ब्रह्मरात्रे नत्रिपुं
ड्रंद्विजैर्धार्यंपद्माकारंतथैवच नचान्यदेवताभक्तिरापद्यपिकदाचन त्रिपुंड्रस्यधरंविप्रंपद्माकारधृतंतथा श्वपाकमिव
पश्येतनसंभाष्येतकर्हिचित् त्रिपुंड्रंब्राह्मणोविद्वान्लीलयापिनधारयेत् त्रिपुंड्रधारणाद्विप्रोपतत्येवनसंशयः तिर्य-
क्पुंड्रधरंविप्रंचांडालमिवसंत्यजेत् सोनर्हःसर्वकृत्येषुसर्वलोकेषुगर्हितः त्रिपुंड्रधारिणोनित्यंभस्मधूलितविग्रहाः
भविष्यति त्रयीबाह्यायथान्यामफलायिनः ब्राह्मणस्योर्ध्वपुंड्रंचक्षत्रियस्यार्धचंद्रकम् वैश्यस्यवर्तुलाकारंशूद्रस्यैव
त्रिपुंड्रकम् ब्राह्मणानांमृदाप्रोक्ताक्षत्रियाणांतुचंदनम् वैश्यानांबिल्वमूलंतुशूद्राणांभस्मचोच्यते ऊर्ध्वपुंड्रंतुसर्वे-
षांनोनिषिद्धंकदाचन धारयेत्क्षत्रियाद्योपिविष्णुभक्तोभवेद्यदि रुद्राक्षधारिणंविप्रंसदाभस्मानुलेपनम् संकुलंतस्य

जेन्नित्यं सर्वधर्मबहिष्कृतम् तिर्यक्सुंड्रधरो विप्रः पंक्तिमध्ये स्थितो यदि सापंक्तिर्ब्रह्महत्यायां योजयेन्नात्र संशयः तिर्यक्पुंड्रध-
रो विप्रो यत्र तिष्ठति दुर्मतिः तद्देशं पापसंभूतं स्मशानसदृशं भवेत् सम्य कृत्वा ललाटे तु ऊर्ध्वपुंड्रं पुनः स्वयम् यश्छिनत्ति त्रिपुं
ड्रेण स पापी श्वपचाधमः विष्वक्सेनसंहितायाम् न धारयेज्जटाभारं भस्म चैव न धारयेत् बाह्यलिंगानि चिन्हा-
नि संत्यजेद्यावदायुषम् तमसा भस्म रजसा गंधः सत्वेन मृत्तिका मृदं यस्तु धरेत्तस्मादेकांतसिद्धिमाप्नुयात् जटिला-
मुंडिताश्चैव तिर्यक्पुंड्रधरास्तथा भविष्यंति त्रयीबाह्या मिथ्याज्ञानप्रलापिनः कपालकेशभस्मास्थिशक्तिपाषाणधारि
णाम् त्रिपुंड्रधारिणं विप्रं चांडालमिव संत्यजेत् स्वच्छंदमतवेषाश्च मिथ्यालिंगधरास्तथा ब्रह्मकोपाग्निनिर्दग्धा रुद्रभ
क्ता जटाधराः अग्निदग्धरदं चैव लिंगपाषाणधारिणाम् त्रिपुंड्रधारिणं विप्रं चांडालमिव संत्यजेत् वाराहे कुलीनो
ब्राह्मणो विद्वान् भस्मधारी भवेद्यदि वर्जयेत्तादृशं देवि मद्योच्छिष्टघटं यथा मात्स्ये यो विनावोर्ध्वपुंड्रेण यत्कुर्या
त्कर्म वैदिकम् निष्फलं तस्य तत्कर्म भस्मन्येवाहुतिर्यथा हारीते ऊर्ध्वपुंड्रविहीनस्तु संध्याकर्म समाचरेत् तत्सर्वं रा
क्षसैर्नीतं नरकं स च गच्छति नित्यं नैमित्तिकं काम्यं त्रिविधं श्रुतिनोदितम् ऊर्ध्वपुंड्रविहीनस्य सर्वं तन्निष्फलं भवेत् ब्राह्म-
णः श्रोत्रियो विद्वान् भस्मधारी भवेद्यदि स जीवन्नेव शूद्रःस्यान्नरकं चाधिगच्छति रुद्रार्चनं त्रिपुंड्रस्य धारणं यत्र दृश्यते शूद्रा
णां च विधिः प्रोक्तो न द्विजानां कदाचन तिर्यक्पुंड्रधरं विप्रं पट्टाकरध्वतं तथा श्वपाकमिव पश्येत न संभाष्येत् कदाचन वासि

ना.मा.
६

ष्टस्मृतौ ब्राह्मणानांमृदाधार्यानभस्मनचचंदनम् ब्राह्मणानांमृदेवोक्तंनभस्मनचचंदनम् याज्ञवल्क्ये शैवस्यचसदा· २
भस्मनचमृन्नचचंदनम् ब्राह्मणानामृदेवोक्तानभस्मनचचंदनम् पाद्मे वर्तुलंतिर्यकूछिद्रंचन्हस्वदीर्घंतनूत्तरं वक्रंविरूपं·
बद्धाग्रंछिन्नमूलपदच्युतम् अशुभंरूक्षमारक्तंतथानांगुलिकल्पितम् विगंधंचाप्यसंरव्यंचपुंड्रमाहुरनर्थकम् शांतिदा
ऽनामिकाप्रोक्तामध्यमायुःकरीभवेत् अंगुष्ठंपुष्टिदंप्रोक्तंतर्जनीमोक्षदायिनी निरंतरालंयःकुर्यादूर्ध्वपुंड्रंद्विजाधमः सहित
त्रस्थितंलक्ष्म्यासहविष्णुंव्यपोहति अछिद्रमूर्ध्वपुंड्रंतुयेकुर्वंतिद्विजाधमाः तेषांललाटेसततंशुनःपादोनसंशयः॥
तस्माच्छिद्रान्वितंपुंड्रमहाछिद्रंशुभान्वितम् धारयेद्ब्राह्मणोनित्यंहरिसालोक्यसिद्धये मध्यछिद्रेणसंयुक्तंतद्विदे
हरिमंदिरम् ऊर्ध्वपुंड्रमृजंसौम्यंरूपार्श्वंरूमनोहरम् एकांतिनोमहाभागाःसर्वभूतहितेरताः सांतरालंप्रकुर्वंतिपुंड्रं
हरिपदाकृतिम् तस्माच्छिद्रान्वितंपुंड्रंदंडाकारंरूशोभनम् विप्राणांसततंधार्यंस्त्रीणांचशुभदर्शनं एवंद्वादशपुंड्रा
णिब्राह्मणःसततंधरेत् अंतरालेषुसर्वेषुहरिद्राधारयेच्छ्रियम् चत्वारिभूभृतांप्रोक्तंपुंड्राणिद्वेविशांपते: एकपुंड्रंतुना·
रीणांशूद्राणांतुविधीयते ललाटेहृदिबाह्वोश्चचतुःपुंड्राणिधारयेत् ललाटेहृदयेद्वेतुभालेत्वेकंविधीयते ऊर्ध्वपुंड्रं·
ललाटेतुसर्वेषांप्रथमंस्मृतम् मूर्तयेवास्रुदेवाद्याःचतुःपुंड्रेषुधारयेत् द्वयोर्गोविंदकृष्णौतुएकंनारायणंधरेत् एवंपुंड्र· ६
विधिःप्रोक्तःसर्वेषांगिरिजेमया इतिसारसंग्रहेऊर्ध्वपुंड्रधारणोनामद्वितीयःसंस्कारः २ अथतृतीयनामसं

संस्कार उच्यते॥ ॥ तदुक्तं पाराशरे नामकर्म प्रवक्ष्यामि पापनाशनमुत्तमम् चक्रादिधारणं यत्र तत्र वै नामकर्म च नाम
धेयं विधानाच्च वैष्णवं पापनाशनम् मूर्तयः केशवाद्याश्च तथा संकर्षणादयः मत्स्यकूर्मादयो व्यूहा विभवाश्च हरेस्तथा तेषा
मन्यतरं नाम तत्र दद्याच्छुभाह्वयम् नाम चैव सदा स्यात्तु मुख्यमेव तदुच्यते विना कृतश्चेद्विफलं श्रेयस्तस्य महामुने योज
येन्नाम सदा स्यात् भगवन्नामपूर्वकम् तस्मात्पापानि नश्यन्ति पुण्यभागी भवेन्नरः वसिष्ठस्मृतौ न दासो वासुदेवस्य
सर्वलोकेश्वरस्य हि तेषां हि नरके वासः कल्पायुतशतैरपि अन्यत्रापि स्वजीवनेच्छा यदि ते स्वसत्तायां स्पृहा यदि
आत्मदास्यं हरेः स्वाम्यं स्वभावं च सदा स्मर नारदपञ्चरात्रे अज्ञानाद्यदि वाज्ञानादशुभं यत्कृतं मया क्षन्तुमर्हसि दे
वेशदास्येन च गृहाण माम् न जाने कर्म यत्किंचिन्नापि लौकिकवैदिकम् न निषेधविधिर्विष्णो तव दासोऽस्मि केवलम् श्री
मद्भागवते नवमस्कंधे दुर्वासवाक्यम् यन्नामश्रुतिमात्रेण पुमान्भवति निर्मलः तस्य तीर्थपदः किं वा दासानामवशिष्य-
ते तथा सोऽहं परित्यक्तदासोऽहं यो वदेत्सदा वैष्णवो स जगत्पूज्यो याति विष्णोः परं पदम् नाहं विप्रो न च नरपतिर्नापि वै
श्यो न शूद्रो नो वा वर्णी न च गृहपतिर्नो वनस्थो यतिर्वा किंतु प्रोद्यन्निखिलपरमानंदपूर्णामृताब्धेर्लक्ष्मीभर्तुः पदकमलयो-
र्दासदासानुदासः पाराशरे दासभूताः स्वतः सर्वे ह्यात्मानः परमात्मनः नान्यथा लक्षणं तेषां बंधे मोक्षे च विद्यते त
थैव अहमस्मि नारायणदासदासः दासस्य दासस्य च दासदासः अन्येष्व ईशो जगतो नराणां तस्मादहं धन्यतरोऽस्मि लो

गा·सा·
७

के मज्जन्मनःफलमिदंमधुकैटभारेमत्प्रार्थनीयमदनुग्रहएषएव त्वद्भृत्यभृत्यपरिचारकभृत्यभृत्यभृत्यस्यभृत्यइतिमां
स्मरलोकनाथ तथाचपरमपदेपि एकधादशधाचैवशतधाचसहस्रधा अनंतधास्वसंकल्पाद्दासकिंकरविग्रहाः दा
सःसखावाहनमासनंध्वजोयस्तेवितानंव्यजनंत्रयीमयः तथावादिपक्षे दास्यनामंतुशूद्राणांनद्विजानांकदाचनेतिके
चिदाहुः तंप्रत्याहपाद्मे ब्रह्माणंरुद्रमिंद्रंचयमंवरुणमेवच नारायणस्यदासास्तेयेवान्यांडस्यमध्यगाः यःपरःपुरुषो
विष्णुर्नारायणउदाहृतः दासभूतमिदंतस्यब्रह्माद्याःसकलंजगत् सृष्टंपुनस्तथासर्गेतस्मान्नारायणाच्युते तस्यदास्यंच-
तुर्थ्यंतमंत्रेप्रोक्तंतुपार्थिवे नवेदयज्ञाध्ययनैर्नव्रतैश्चोपवासकैः प्राप्यतेवैष्णवंलोकंविनादास्येनकुत्रचित् तस्माद्दास्यंहरे
र्भक्त्याभजेतानन्यमानसः प्राप्नोतिपरमांसिद्धिंकर्मबंधविमोचनीम् श्रीमद्रामायणेहनुमानवाक्यम् दासोहंकोश
लेंद्रस्यरामस्याक्लिष्टकर्मणः हनुमान्शत्रुसैन्यानांनिहंतामरुतात्मजः श्रुतावपि ब्रह्मदासाब्रह्मदासाब्रह्माहमेतिकि
तवाः हारीतस्मृतौ द्वादशैवतुमासास्तुकेशवाद्यैरधिष्ठिताः आरभ्यमार्गशीर्षंचयथासंख्यंद्विजोत्तमाः यस्मिन्मा
सेभवेद्यस्तुयन्मूर्तिर्नामचोदिताः नृसिंहरामकृष्णाख्यानाममन्येचकल्पयेत् मंत्रभाष्ये आकारवाच्यस्यश्रीमन्ना
रायणस्यमकारवाच्यात्मादासइतिकथ्यते हारीते गुणयोगेनचान्यानिविष्णुनामानिलौकिके विशिष्टंवैष्णवंनामसर्व ७
कर्मसुनोदितम् परंपरांगुरुर्नामदद्यादिच्छिष्यसंस्कृतंतुवा तस्माद्भगवतोनामसर्वेषांश्रुतिचोदितम् शक्त्याचैषावताराणांवर्ज

सं

येन्नामवैष्णवः नामदद्यात्प्रयत्नेनवैष्णवंपापनाशनम् यस्यवैवैष्णवंनामनास्तिचेत्तुद्विजन्मनः अनामकःसविज्ञेयःसर्वकर्मसु-
गर्हितः नामदासादिषष्ठ्यंतंग्राहयेत्केवलंतुवा दद्यात्तन्नामदासांतंभगवन्नामपूर्वकम् दास्यमेवपरंधर्मदास्यमेवपरंहितम् दा
स्येनैवभवेन्मुक्तिरन्यथानिरयंव्रजेत् विष्णोर्दास्यपराभक्तिर्येषांतुनभवेत्क्वचित् तेषामेवहिसंसृष्टंनिरयंब्रह्मणानृप नाराय-
णस्यदासायेनभवंतिनराधमाः जीवत एवचांडालाभविष्यंतिनसंशयः नास्तिचेद्वैष्णवंनामयस्यवैद्विजसत्तम सपाषंडीतिवि-
ज्ञेयःसर्वकर्मसुगर्हितः एवंतृतीयसंस्कारंकृत्वावैवैष्णवोत्तमाः चतुर्थमंत्रसंस्कारंकुर्वीतद्विजसत्तमाः इतिसारसंग्रहेतृ
तीयःसंस्कारः अथचतुर्थोमंत्रसंस्कारोलिख्यते तदुक्तंहारीते शृणुराजन्प्रवक्ष्यामिमंत्रयोगमनुत्तमम् यथोक्तं
विष्णुनापूर्वंब्रह्मणःपरमात्मना सर्वेषामेवमंत्राणांप्रथमंगुह्यमुत्तमम् मंत्ररत्नंनृपश्रेष्ठसद्योमुक्तिफलप्रदम् सर्वैश्वर्यप्र-
दंपथ्यंसर्वेषांसर्वकामदम् यस्योच्चाटनमात्रेणपरितुष्टोभवेद्धरिः देशकालादिनियममरिमित्रादिशोधनम् स्वरवर्णादि-
दोषश्चपौरश्चारणिकंनतु ब्राह्मणाःक्षत्रियावैश्याःस्त्रियःशूद्रास्तथेतराः तस्याधिकारिणःसर्वेसर्वशीलगुणायदि अ
नन्यसाधनायेतुअनन्यशरणास्तथा अनन्यभोग्यायेराजन्नृतएवास्याधिकारिणः पंचसंस्कारसंपन्नाःश्रद्धावंतोनसू-
यकाः भक्त्यापरमयाविष्णोर्युक्तास्तस्याधिकारिणः पंचविंशाक्षरोमंत्रःपदैःषड्भिःसमन्वितः वाक्यद्वयपरंमंत्रंज्ञेयं
रत्नमनुत्तमम् तथाचपाद्मेब्रह्मानारायणसंवादे -दुर्वृत्तोवासुवृत्तोवामूर्खोवापंडितोपिवा लक्ष्मींचमांस्मरेशांच

रा. सा. ८ द्वयेनशरणंगतः मल्लोकमचिरंलब्ध्वामत्सायुज्यंसगच्छति अतिपापप्रसक्तोपि श्रीवैकुंठंपुरातनम् द्वयानुष्ठानमात्रेणनरः- स
शीघ्रंसगच्छति मूर्खोवाधर्मशीलोवानिंदितोवाप्यनिंदितः द्वयोच्चारणमात्रेणनरःशीघ्रंसगच्छति नानुकूल्यंननक्षत्रंनती
र्थादिनिषेवणम् नपुरश्चरणंनित्यंजपन्नापेक्षतेद्वयम् द्वयेनमंत्ररत्नेनमत्प्रियेणभजेत्सदा ऋष्यादिकंकरन्यासंसंगन्या-
संचवर्जयेत् नारीवापुरुषोवापिगुरुवंदनपूर्वकम् स्त्रीणांचसर्ववर्णानांपुरुषाणांतथाविदुः द्वयेनप्राप्नुयाद्यत्रतद्विष्णोःपर
मंपदम् सर्वमंत्रफलान्यस्यविज्ञानेनभवंतिवै अचिरान्मत्प्रसादेनमल्लोकंसचगच्छति सर्वपापक्षयकरंसर्वपुण्यविवर्द्ध
नम् श्रीकरंलोकवश्यंचसद्यःसंसारतारकम् मानसंवाचिकंपापंकायिकंचत्रिधाकृतम् द्वयस्मरणमात्रेणनाशंयातिसु
निश्चितम् संसारार्णवमग्नानांसद्यःसंसारतारणम् द्वयमेकंतुविप्रेंद्रनास्त्यस्यसदृशंभुवि एवंज्ञात्वाद्विजश्रेष्ठद्वयंनित्य
मतंद्रितः श्रीमन्नारायणंध्यात्वातंभजेत्पुरुषोत्तमम् द्वयंहिसर्वसुलभंआचारंनैवपेक्षते उपायशून्यतांवीक्ष्यददातिपर
मंपदम् न्यासद्वयंप्रपत्तिःस्यात्सर्यायेणनिबोधमे द्वयोपदेशपूर्वेणसर्वकर्मसमाचरेत् द्वयाधिकारिनभवेत्सर्वमंत्रेषुनार्ह
ति तस्माद्द्वयमधीत्यैवमंत्रमष्टाक्षरंभ्यसेत् पाराशरे अध्यापयेन्मंत्ररत्नंऋषिछंदोधिदैवतम् सन्यासंचससुद्रंच
सार्थमध्यापयेद्गुरुः उच्चारणान्मनोरस्यसर्वसिद्धिफलंलभेत् अनधीत्यद्वयंमंत्रंनविप्रोनचवैष्णवः अचक्रधारिणंविप्रं ८
योध्यापयतिदेशिकः शिष्येणसहितोयातिनरकंरौरवंद्विजः कुलजोवातपस्वीवावेदवेदांगपारगः यज्ञदानपरोवापि-

सर्वतीर्थोपसेवकः व्रतीवासत्यवादीवायतिर्वाज्ञानवानपि हृयाधिकारीनभवेत्तंप्रयत्नेनवर्जयेत् इतिमंत्ररत्नमाहात्म्यं॥
अथाष्टाक्षरमाहात्म्यंलिख्यते हारीते सर्वार्थविद्गर्भस्थाचेदाश्चाष्टाक्षरेस्थिताः अष्टाक्षरस्तुप्रणवेत्त्यकारेप्रणवः-
स्थितः ऐहलौकिकमैश्वर्यंस्वर्गाद्यंपारलौकिकम् कैवल्यंभगवंतंच मंत्रोयंसाधयिष्यति किमत्रबहुनोक्तेन सर्वसिद्धिप्र-
दोनृणाम् श्रीसदष्टाक्षरोमंत्रो नित्यंप्रियतमोहरेः आसीनोवाशयानोवातिष्ठन्वायत्रकुत्रचित् जपेदष्टाक्षरंमंत्रंतस्याविं-
ष्णुःप्रसीदति स्नातःसर्वतीर्थेषुसर्वयज्ञेषुदीक्षितः अधीतःसर्ववेदानांयोजपेत्सततंमनुम् ब्रह्मघ्नोवाकृतघ्नोवामहा
पापयुतोपिवा अष्टाक्षरस्यजप्तारंदृष्ट्वापापैःप्रमुच्यते अष्टाक्षरस्यजप्तारो यथाभागवतोत्तमाः पुनंतिसकलंलोकंसदेवा
सुरमानुषम् अष्टाक्षरस्यजप्तारंप्रणमेद्यस्तुभक्तितः सर्वपापविनिर्मुक्तोविष्णुलोकेमहीयते अचिंत्यंममामाहात्म्यंमनोर
स्यजगत्पते नहिवक्तुंमयाशक्यंब्रह्माद्यैस्त्रिदशैरपि व्यापकानांचसर्वेषांज्यायानष्टाक्षरोमनुः अष्टाक्षरंप्रजप्स्यातुसा
क्षान्नारायणःस्वयम् सन्यासंचसमुद्रंच सर्षिछंदोधिदेवतम् सदीक्षाविधिसध्यानंसार्थंमंत्रमुदाहृतम् जपेद्योग्यत-
यामंत्रंसततंवैष्णवोत्तमः नसाधनतयाजप्यंकर्तव्यंविष्णुतत्परैः अष्टोत्तरसहस्रंवाशतमष्टोत्तरंतुवा त्रिसंध्यासुजपे
न्मंत्रंतदर्थमनुचिंतयन् अष्टाक्षरस्यजप्तारंशंखचक्रादिधारिणम् योवमन्येद्विमूढात्मासद्यश्चांडालतांव्रजेत् इतिअ
ष्टाक्षरमाहात्म्यम् अथचरमश्लोकोत्कर्षंलिख्यते तदुक्तंविष्णुयामले महामते भारतोदधिनिर्मथ्यगीतानिर्मथ्य

तस्यच सारमुद्धृत्यकृष्णेन अर्जुनस्यमुखेहुतम् भारतामृतसारंचभगवन्मुखनिःसृतम् गीताचमोदकंपीत्वापुनर्जन्मनवि
द्यते मलनिर्मोचनंपुंसांगंगास्नानंदिनेदिने चरमश्लोकांभसिस्नानेसंसारमलनाशनम् सर्वशास्त्रमयीगीतासर्वदेवमयोहरिः
सर्वतीर्थमयीगंगासर्वधर्मोदयापरः कृष्णवृक्षसमुत्पन्नागीताचर्महरीतकी रेजनाःकिंनखाद्यंतेकलौमलविमोचनी यत्स्व
यंपद्मनाभस्यमुखपद्माद्विनिःसृतम् इदंसारमयंप्रोक्तंगुह्यंवेदार्थविस्तरम् निर्मथ्यसर्वशास्त्राणिकृष्णेनकथितंध्रुवम्
पठनाच्छ्रवणाद्वापिविष्णुसायुज्यमाप्नुयात् यःपठेत्सततंभक्त्यागीतासारसमुच्चयम् सनरोमोक्षमाप्नोतिसिद्धोभवतिना
न्यथा पादंवाअर्धपादंवाश्लोकार्द्धंश्लोकमेवच योनित्यंध्यायतेविप्रःसमोक्षमधिगच्छति श्लोकोयंपद्मनाभस्यमुखपद्मा·
द्विनिःसृतः यःपठेत्परमःप्रीत्यासगच्छेद्विष्णुमव्ययम् भगवद्वाक्यम् योमांगीतासमूहेनस्तोतुमिच्छतिपांडव ॥
सोहमेकेनश्लोकेनस्तुतएवनसंशयः भगवद्गीतायामपिभगवद्वाक्यम् सर्वगुह्यतमंभूयःशृणुमेपरमंवचः इष्टो
सीमेदृढमतिस्ततोवक्ष्यामितेहितम् यइदंपरमंगुह्यंमद्भक्तेष्वभिधास्यति भक्तिंमयिपरांकृत्वामामेवैष्यत्यसंशयः श्र·
द्धावाननसूयश्चशृणुयादपियोनरः सोपिमुक्तःशुभांल्लोकान्प्राप्नुयात्पुण्यकर्मणाम् इत्यादिवाक्यंचरमश्लोकपरम् श्री
मदष्टाक्षरंमंत्रंमंत्ररत्नयुगाह्वयम् गीतास्थचरमश्लोकंयोजानातिसवैष्णवः पंचरात्रे न्यासेवाप्यर्चनेवापिमंत्रमेकां
तिनोश्रयेत् अवैष्णवोपदिष्टेनमंत्रेणनरकंव्रजेत् अवैष्णवात्तंमंत्रंयःपठेद्वैष्णवोद्विजः कल्पकोटिसहस्राणिपच्यतेन-

सं·

९

रकाम्बिना पाराशरे अचक्रधारिणांविप्रंयोध्यापयतिदेशिकः शिष्येननरकंयातिकल्पकोटिशतंद्विजः तस्मात्तापादिसंस्का-
रात्सर्वंमंत्रमनुत्तमम् अध्यापयेद्गुरुःसम्यक् अन्यथानरकंव्रजेत् पद्मपुराणे अवैष्णवोपदिष्टंचपूर्वंमंत्रंपरित्यजेत् पुन-
श्चविधिनासम्यक् वैष्णवाद्ग्राहयेन्मनुम् हारीते अचक्रधारिणंविप्रंमंत्रमध्यापयेत्तुयः रौरवंनरकंप्राप्यचांडालियो-
निमाप्नुयात् तस्माद्दीक्षाविधानेनशिष्यंभक्तिसमन्वितम् मंत्रमध्यापयेद्विद्वान्वैष्णवंपापनाशनम् भारद्वाजसंहिता-
यां नजातुमंत्रदानारीर्नशूद्रोनांतरोद्भवः नाभिशस्तोनपतितःकामकामाप्यकामिनम् सच्छुरुःज्ञातिविज्ञेयसंततेकांत
निर्मले कुलेजातोगुणेषुकोविप्रश्रेष्ठतमोगुरुः पाद्मे सहस्रशाखाध्यायीचसर्वयज्ञेषुदीक्षितः कुलेमहति-
जातोपिनगुरुःस्याद्वैष्णवः यस्तुमंत्रद्वयंसम्यक् अध्यापयतिवैष्णवः सआचार्यस्तुविज्ञेयोभवबंधविनाशकः हा-
रीते आचार्यसंश्रयेत्पूर्वमनवद्यंवैष्णवंद्विजः शुद्धसत्वगुणोपेतंनवेज्याकर्मकारकम् सत्संप्रदायसंयुक्तंमंत्ररत्ना-
र्थकोविदम् ज्ञानवैराग्यसंपन्नंवेदवेदांगपारगम् शासितारंसदाचारैःसर्वधर्मविदांवरम् महाभागवतंविप्रंसदा-
चारनिषेवितम् आलोक्यसर्वशास्त्राणिपुराणानिचवैष्णवः तदर्थमाचरेद्यस्तुसआचार्यइतीरितः तथाचश्रुतिः
आचार्यवान्पुरुषोवेद नैषातर्केणमतिरापनेयाप्रोक्तान्येनैवसुज्ञानायप्रेष्ठेत्यादि श्रीभागवते तस्माद्गुरुंप्रप-
द्येतजिज्ञासुःश्रेयआत्मनः शाब्देपरेचनिष्णातंब्रह्मण्युपशमाश्रयम् कठवल्ल्युपनिषदि गुशब्दस्त्वंधकारस्स्यरुश-

द्वस्तन्निरोधकः अंधकारनिरोधत्वाद्गुरुरित्यभिधीयते अथशिष्यलक्षणम् तदुक्तंहारीते आस्तिक्यमनसंसद्भि
रुपेतंधर्मवत्सलं श्रद्धधानंसदाचारंगुरुशुश्रूषतत्परम् एकादशो सायंप्रातरुपानीयतिक्षांतस्मैनिवेदयेत यच्चान्यद
प्यनुज्ञातमुपभुंजीतसंयतः शुश्रूषमाणआचार्यंसदोपासीतनीचवत् यानशय्यासनस्थानेर्नातिदूरेकृतांजलिः एवंब्र
तोगुरुकुलेवसेद्भोगविवर्जितः विद्यासमाप्यतेयावद्विभ्रद्व्रत्तमखंडितम् आचार्यंमांविजानीयान्नावमन्येनकर्हिचित् न
मर्त्यबुध्यासेवेत सर्वदेवमयोगुरुः आदित्यपुराणे पाद्मेरुष्टेहरस्त्राताहरेरुष्टेहरिस्तथा हरौरुष्टेगुरुस्त्रातागुरौ
रुष्टेनकश्चन सप्तमस्कंधे यस्यसाक्षाद्भगवतिज्ञानदीपप्रदेगुरौ भक्तिर्नस्यात्कृतंतस्यमन्येकुंजरशौचवत् अ
ग्निसंभवसंहितायाम् येगुर्वाज्ञांनकुर्वंतिपापिष्ठाःपुरुषाधमाः नतेषांनरकक्लेशनिस्तारोमुनिसत्तम अथदीक्षाका
लनिर्णयः मंत्रसारे द्वितीयापंचमीवापिषष्ठीवापिविशेषतः द्वादश्यामपिकर्तव्यंत्रयोदश्यामथापिवा वसंतेदीक्षये
द्विप्रंग्रीष्मेराजन्यमेवच शारदेसमयेवैश्यंहेमंतेशूद्रमेवच स्त्रियश्चवार्षिकेकालेदीक्षयेद्यत्नतस्तथा दीक्षितायविशे
षेणप्रसीदेन्नान्यथाहरिः ब्राह्मणःक्षत्रियोवापिवैश्यःशूद्रोथवापुनः एवंस्त्रियोवायत्नेनगुरुमेवसमाश्रयेत् आ
र्तेमुमुक्षूणांनियमोन तदुक्तंतत्वसारे दुर्लभंसद्गुरूणांतुसत्संगाद्यदुपस्थितम् तदनुज्ञायदालब्धासदीक्षावासरो
महान् ग्रामेवायदिवारण्येक्षेत्रेवादिवसेनिशि आगच्छतिगुरुर्दैवात्तदादीक्षांप्रकारयेत् अवश्यंवैष्णवींदीक्षांप्रविश

सर्वप्रयत्नतः दीक्षितायविशेषेणसंसिद्धिर्नात्रसंशयः अथशरणागतलक्षणम् तदुक्तंपाराशरे मातात्वंसर्वलोका-
नांसर्वलोकेश्वरप्रिये आश्रयणत्वेनमिममपराधशतैर्वृतम् नारायणदयासिंधोवात्सल्यगुणसागर त्वद्येनपापि-
नंदेवकृपयासमुपागतम् एवंप्रपद्यदेवेशमाचार्यकृपयास्वयम् स्वाचार्यंहृदयेध्यात्वामंत्रमध्यापयेद्गुरुः हारीते
एनंरक्षदयासिंधोबहुजन्मापराधिनम् इत्याचार्येणसंदिष्टंप्रपद्येतजनार्दनम् इतिप्रपन्नमाचार्योनिवेश्यपुरतोहरेः
अध्यापयेत्ततस्तस्मैमंत्ररत्नंशुभाह्वयम् गद्यत्रयेपि पितरंमातरंदारान्पुत्रान्बंधून्सखीन्गुरून् रत्नानिधन
धान्यानिक्षेत्राणिचगृहाणिच सर्वधर्मांश्चसंत्यज्यसर्वकर्मांश्चसाक्षरान् लोकविक्रांतचरणौशरणंतेव्रजंविभोः ये
नकेनप्रकारेणद्वयवक्तात्वंमदीययैवकृपया तथाचनारायणसंहितायां यथाहिपाणिग्रहणंरक्षाबंधनपूर्वकं
म् एकस्मिन्नेवयुगपन्मुहूर्तेक्रियतेरमे शरणागतिरप्येवंहेतितापादिपूर्वकम् एकस्मिन्नेवकालेवैकार्याशिष्यस्यदे-
शिके: मंत्ररत्नानुसंधानपूर्वकंतस्यसादरम् भगवत्पादयोरात्मनिक्षेपोत्यागउच्यते मंत्रार्थतत्वविदुषंयागतंत्रेनि-
योजयेत् आचार्याधीनवृत्तिस्तुयावज्जीवंभवेत्तदा यावच्छरीरपातंतुद्वयमावर्तयेन्मनुम् इतिश्रीसारसंग्रहेमंत्र
संस्कारोनामचतुर्थसंस्कारः। ४ अथपंचमोयागसंस्कारउच्यते तदुक्तंपाराशरे अथयागविधिंवक्ष्येसंस्का
रंतुमनुत्तमम् अभिवाद्यनमस्कृत्यप्रणिपत्यततोगुरुम् तस्यप्रसादलब्धंहिगृहीत्वाविग्रहंहरेः श्रीभूमिनीलासहितं

साग्रुधंसपरिच्छदम् अर्चयेत्प्रयनोनित्यंयथाकालमतंद्रित: अप्सुव्योम्नितथार्चायांवन्हौत्दृदितथागुरौ अथपरतत्व सं.
निर्णयेतथाचश्रुति: एकएवनारायणआसीन्नब्रह्मानेशाननेमेद्यावापृथिवी नारायणाद्ब्रह्माजायते नारायणाद्रुद्रोजाय
ते नारायणात्प्रजापति:प्रजायते तथाचस्मृति: सर्वज्ञस्त्वंजगत्साक्षीचराचरगुरु:पिता सर्वलोकेश्वर:साक्षात्सृष्टि-
स्थित्यंतकारक: ईश्वरोभगवान्विष्णु:परमात्माजगत्पति: अनंत:पुरुष:साक्षात्परंब्रह्मशिव:प्रभु: नारायण:सर्वग
त:परंज्योति:परात्पर: तस्मात्तुभगवान्विष्णु:परमात्मासईश्वर: पद्मपुराणेपि योसौसर्वगत:श्रीमान्वासुदेव:परा-
त्पर: अनादिनिधनोविष्णु: सएवपरमेश्वर: शुद्धसत्वमयोयोसौकल्याणगुणवान्प्रभु: पुंडरीकेक्षण:श्रीमान्श्रीपति:
पुरुषोत्तम: विप्राणांवेदविदुषामेकएवार्चित:प्रभु: विप्राणांनेतरेपूज्यारजस्तमविमोहिता: भारतेअश्वमेधपर्वेभगव-
द्वचनम् रुद्रंसमाश्रितादेवारुद्रोब्रह्माणमाश्रित: ब्रह्मासमाश्रितोमत्यंनाहंकश्चिदुपाश्रये ममाश्रयस्तुनोकश्चित्स
र्वेषामाश्रयोत्यहम् इदंरहस्यंकौंतेयप्रोक्तवानहमव्ययम् नारायणात्परादेवोनभूतोनभविष्यति एतद्रहस्यंवेदानांपु
राणानांचसत्तम सर्वेदेवा:सपितराब्रह्माद्याश्चांडमध्यगा: विष्णो:सकाशादुत्पन्नाइतीयंवैदिकीश्रुति: नृसिंहपुरा
णे ब्रह्मादय:सुरा:सर्वेविष्णुमाराध्यतेपुरा स्वंस्वंपदमनुप्राप्ता:केशवस्यप्रसादत: येतुसामान्यभावेनमन्यंतेपुरुषो ११
त्तमम् तेवैपाखंडिनोज्ञेयानरकार्हानराधमा: सहस्रनाम्न्यपि दैवतंदेवतानांचभूतानांयोव्यय:पिता यत:स-

र्वाणिभूतानिभवंत्यादियुगागमे यस्मिंश्चप्रलयंयांतिपुनरेववक्रगक्षये तस्यलोकप्रधानस्यजगन्नाथस्यभूपते भगवन्नी
तापाम् पितासिलोकस्यचराचरस्यत्वमस्यपूज्यश्चगुरुर्गरीयान् नत्वत्समस्त्वस्त्यभ्यधिकःकुतोन्योलोकत्रयेप्यप्रतिम-
स्वभावः श्रीभागवते श्रियःपतिर्यज्ञपतिः प्रजापतिर्धियांपतिर्लोकपतिर्धरापतिः पतिर्गतिश्चांधकवृष्णिसा
त्वतांप्रसीदतांमेभगवान्सतांगतिः प्रजापतिस्मृतौ नारायणंपरित्यज्यहृदिस्थंप्रभुमीश्वरम् योन्यमर्चय-
तेदेवंपरबुध्यासपापभाक् वसिष्ठस्मृतौ नारायणंपरंब्रह्म ब्राह्मणानांहिदैवतम् सोमसूर्यादयोदेवाःक्ष-
त्रियाणांविशामपि शूद्रादीनांतुरुद्राद्याःअर्चनीयाःप्रकीर्तिताः भारते ब्रह्माणंशितिकंठंचयाश्चान्यादेवताः
स्मृताः प्रतिबुद्धानसेवंतेयस्मात्परिमितंफलम् पाद्मेभृगुवचनम् शुद्धसत्वमयोविष्णुःकल्याणगुणसागरः ना
रायणःपरंब्रह्मविप्राणांदेवतंहरिः सएवपूज्योविप्राणांनेतरःपुरुषर्षभ मोहाद्यःपूजयेदन्यंसपाखंडीभविष्यति अ
शुद्धाब्रह्मरुद्राद्यारजस्तमविमिश्रिताः नान्यःकश्चिन्नराणांवैपूजनीयःकदाचन नान्यदेवंनिरीक्षेतनान्यदेवंचपू-
जयेत् नचान्यंप्रणमेद्विप्रोनान्यदायतनंविशेत् वाराहे यत्सत्वंसहरिर्देवोहरिस्तत्परमंपदम् सत्वंरजस्तमश्चे-
तितृतीयंचैतदुच्यते लिंगपुराणे हिरण्यगर्भोरजसातमसाशंकरःस्वयम् सत्वेनसर्वगोविष्णुःसर्वात्मासदस-
न्मयः सात्विकैःसेव्यतेविष्णुस्तामसैरेवशंकरः राजसैःसेव्यतेब्रह्मासंकीर्णैश्चसरस्वती बौद्धोरुद्रस्तथावायुर्दुर्गागण

पर्भैरवाः यमस्कंदोनैर्ऋतश्चतामसादेवताःस्मृताः भागवतेपि सत्वंरजस्तमइतिप्रकृतेर्गुणास्तैर्युक्तःपरःपुरुषएकः 
इहास्यधत्ते स्थित्यादयेहरिविरिंचिहरेतिसंज्ञाः श्रेयांसितत्रखलुसत्वतनोर्नृणास्युः मुमुक्षवोघोररूपान्हित्वाभूतपती
नथ नारायणकलाः शांताभजंतिह्यनसूयवः यसिष्ठस्मृतौ श्रीमहाविष्णुमन्येनहीनदेवेनदुर्मतिः साधारणंस
कृद्दृष्ट्वासोत्यजोनांत्यजोंत्यजः वासुदेवंपरित्यज्ययोन्यदेवमुपासते सहेमराशिमुत्सृज्यपांशुराशिंजिघृक्षति तथान्य
पाद्मे यक्षराक्षसभूतानांकूष्माण्डागणभैरवाः नार्चनीयाःसदादृष्टिविष्णुलोकमभीप्सुभिः रजस्तमविभूतानामर्चनंप्र
तिसिध्यति रौरवंनरकंयातियक्षभूतगणार्चनात् तस्मात्तुसर्वयज्ञस्यभोक्तारंपुरुषोत्तमम् ज्ञात्वासर्वत्रकुर्वीतनित्यनैमि
त्तिकीःक्रियाः इत्यादिइतरनिरसनपूर्वकंभगवत्परत्वमुक्तम् अथार्चाप्रकारोलिख्यते पाद्मे जंबुद्वीपेमहापुण्येव
र्षेवैभारतेशुभे अर्चायांसन्निधिर्विष्णोर्नेतरेषुकदाचन भारतेस्मिन्महावर्षेनित्यंसन्निहितोहरिः सर्वावस्थासुसोल
भ्यमर्चायांविंदतेजनैः तस्माद्वैभारतेवर्षेमुनिभिस्त्रिदशैरपि सेव्यतेऋषिभिर्देवितपोयज्ञक्रियादिभिः ऐंद्रद्युम्नेतथाकूर्मे
सिंहाद्रौबदरीवने कृतशौचेप्रयोगेचपौंड्रकेचैवदंडके वैठाकुंद्रोपदेचैवश्वेताद्रौकरवीरके काच्यामनंतशयनेश्रीरंगेगो
रवाचले नारायणाचलेसोम्येवाराहेवामनाश्रमे एवमाद्याःस्वयंव्यक्ताःसर्वकामफलप्रदाः अथवास्थापनंविष्णोःस्वगृ 
हेतद्विशिष्यते शिलयादारुलोहाद्यैःकृत्वाप्रतिकृतहरेः विष्णुयामले मृदाचरम्यरत्नेनताम्रेणरजतेनवा कृत्वादा

रूमयंबिंबमर्चनंकांचनेनवा पुण्यंदशगुणंविंद्यादेतेषामुत्तरोत्तरम् यस्मिन्संन्निहितोविष्णुः स्वयमेवनृणांविभुः हारीते
शास्त्रोक्तकर्मदक्षश्चप्रतिष्ठांकर्तुमर्हति दीक्षितःसकलंकुर्याद्दैवकर्मत्वतंद्रितः पाराशरे देवतांतरभोक्तावासमबु
द्धिरथोपिवा नास्तिकोवेदहीनोवानप्रतिष्ठांसमाचरेत् हारीते अवैष्णवेनविप्रेणस्थापितेमधुसूदने तद्राष्ट्रंभूपति
र्वापिविनाशमुपजायते वसिष्ठस्मृतौ चक्रादिचिन्हहीनेनस्थापितेयदिविग्रहे नसान्निध्यंहरिर्यातिक्रियाकोटि
शतैरपि पंचरात्रे शंखचक्रांकहीनस्यऊर्ध्वपुंड्रविवर्जितम् कृतंपूजाप्रतिष्ठादितत्सर्वंनिष्फलंभवेत् अमंत्रमर्चनं
कुर्यादकालेपूजयेद्धरिम् ग्रामनाशंचदुर्भिक्षंराजशत्रुंविनश्यति अवैष्णवस्थापितानांप्रतिमानांचवंदनम् यःकरो-
तिसमूढात्मारौरवंनरकंव्रजेत् तस्माद्वैष्णवान्विप्रान्नकर्मणिनियोजयेत् महाभागवतंतत्रअर्चायांवरयेत्सुधीः
अर्थपंचकतत्वज्ञापंचसंस्कारसंस्कृताः आकारत्रयसंपन्नास्तेवैभागवतोत्तमाः वसिष्ठस्मृतौ जितेंद्रियःशुभा-
चारःसत्वस्थःशुभलक्षणः श्रुतिस्मृतिपुराणार्थविद्वान्दंभविवर्जितः अर्थपंचकतत्वज्ञोत्वग्निहोत्रयुतश्चिरम् द्वयनि
ष्ठोद्वयार्थज्ञःप्रतिष्ठांकर्तुमर्हति स्निग्धरम्यंगृहीत्वास्मकारयेच्छुभविग्रहम् सर्वावयवसंपूर्णलक्षणेश्चविराजितम् श्री
भूमिसहितंदेवंकारयेच्छुभविग्रहम् एकादश्यांशुक्लपक्षेद्वादश्यांश्रवणेपिवा रोहिण्यामिंदुवारेवातथैवादितिभेशुभे
कार्तिकेमार्गशीर्षेवानभस्येचोत्तरायणे शुभेन्हिशुभलग्नेवाशुभग्रहनिरीक्षिते प्रतिष्ठांकारयेद्विद्वान्यथोक्तविधिनाद्वि-

जः श्रौतस्मार्तागमोक्तानामर्चनंविधिनाद्विजः क्रियालोपंनकर्तव्यंविष्णोराराधनंपरम् धूपैर्दीपैश्चनैवेद्यैस्तांबूलाद्यैश्चभक्तितः
एवमभ्यर्चयेद्विष्णुंयावज्जीवमतंद्रितः शालग्रामशिलायांतुगृहीभिःसिद्धिरिष्यते तस्मिन्संपूजयेद्देवंस्थानेषुचगृहेषुच
हारिते शालग्रामशिलायांतुपूजनंपरमात्मनः कोटिकोटिगुणाधिक्यंभवेदत्रनसंशयः नजपोनाधिवासश्चनचसंस्था
पनक्रिया शालग्रामार्चनेविष्णुस्तस्मिन्सन्निहितःसदा मूर्तीनांचहरेःस्वस्ययस्यांप्रीतिरनुत्तमा तस्यामेवतुतांध्यात्वापू
जयेत्तद्विधानतः तन्मूर्त्यंनरबिंबेतुनयष्टव्यंतदेवनन् शालग्रामशिलायांतुयष्टव्यंबहुमूर्तयः अथतल्लक्षणं तदुक्तं
स्कांदे स्निग्धाकृष्णापांडुराचपीतानीलास्तथैवच रक्तासूक्ष्माचवक्राचमहास्थूलाखलांछिता कपिलाकर्बुराभग्नाबहुच
क्रैकचक्रिका बृहन्मुखाबृहच्चक्रालग्नचक्राथवापुनः बहुचक्राथवाकाचिद्भग्नचक्राखधोमुखा अथतन्माहात्म्यवर्णनम्
तत्रैव स्निग्धास्निग्धकरामंत्रेकृष्णाकीर्तिंददातिच पांडुरापापदहनापीतापुत्रफलप्रदा नीलासंदृश्यतेलक्ष्मीरक्तारो
गप्रदायका सूक्ष्माचोद्वेगदानित्यंवक्रादारिद्र्यदायिका स्थूलानिहंतिचैवायुर्निष्फलातुखलांछिता कपिलाकर्बुराभग्ना
बहुचक्रैकचक्रिका बृहन्मुखाबृहच्चक्रालग्नचक्राथवापुनः बद्धचक्राथवाकाचिद्भग्नचक्राखधोमुखा पूजयेद्यःप्रमादेन
दुःखमेवलभेत्तुसः कपिलाचभ्रमावर्तारेखावर्ताचयाखिला दुःखदासातुविज्ञेयासुखदानकदाचन एतत्सकामपूजा
याम् निष्कामिनस्तु तदुक्तंब्रह्मपुराणे खंडितंस्फुटितंभग्नंपार्श्वभिन्नंविभेदितम् शालग्रामशिलाभूतंशैलदोषा

भवेन्नहि धात्रीफलप्रमाणंस्यात्करणोभयसंपुटा पूजनीयाप्रयत्नेनशिलार्चेतादृशीशुभा शालग्रामशिलायांयोमूल्यमुच्चारयेन्न
रः विक्रेताचानुमंताच यःपरीक्षानुमोदकः सर्वेतेनरकंयांतियावदाभूतसंप्लवः कपिलोनारसिंहस्कपृथुचक्रः शुशोभनः
ब्रह्मचर्येणपूज्योसावन्यथाविघ्नदोभवेत् अतिपापसमाचाराःकर्मण्यनधिकारिणः शालग्रामार्चकावैतेनैवयांतियमाल-
यम् कामक्रोधप्रलोभैश्चव्याप्तोसोवैनराधमः सोपियातिहरेर्लोकंशालग्रामशिलार्चनात् अशुचिर्वादुराचारिसत्यशौच-
विवर्जितः शालग्रामशिलांस्पृष्ट्वासद्यएवशुचिर्भवेत् ब्राह्मणक्षत्रियविशांसच्छूद्राणामथापिवा शालग्रामेधिकारो-
स्तिनचान्येषांकदाचन अतिपापसमाचारइत्यारभ्यकदाचनपर्यंतंप्रशसातिशयेमुक्तम् सांप्रदायप्रकारस्त्वन्यः वि-
नातीर्थैर्विनादानेर्विनायज्ञैर्विनामखैः शालग्रामशिलांस्पृष्ट्वासद्यएवशुचिर्भवेत् हारीते ब्राह्मणैःसर्वैःपूज्योहंशुचै-
रप्यशुचैरपि स्त्रीशूद्रयोःकरस्पर्शवज्रादपिसुदुष्करम् पंचसंस्कारसंपन्नोमंत्ररत्नार्थकोविदः शालग्रामशिलायांतुपू-
जयेत्पुरुषोत्तमम् वाराहंनारसिंहंचहयग्रीवंचवामनम् ब्राह्मणःपूजयेद्विष्णुंयज्ञमूर्तिंचकेशवम् क्षत्रियःपूजयेद्रामं-
केशवंमधुसूदनम् नारायणंवासुदेवंवैश्यःसंपूजयेत्तथा बालगोपालवेशंचस्त्रीशूद्रैःपूजयेत्सदा॥ द्विजानामेवना-
न्येषांशालग्रामशिलार्चनम् स्थंडिलेहृदयेवापीपूजयेच्छूद्रयोनिजः बालकृष्णंवसुदेवंपूजयेद्द्विजःसदा अर्चनवंद-
नंदास्यंप्रणामंदर्शनंनृणाम् शालग्रामशिलायांतुसर्वकोटिगुणंभवेत् सस्नातःसर्वतीर्थेषुसर्वयज्ञेषुदीक्षितः

पौरुषेणतुसूक्तेनपूजयेत्पुरुषोत्तमम् . पाराशरे पंचरात्रविधानेनतथावैखानसेनवा स्मृत्युक्तेनाथवाकुर्यात्क्रिया·
लोपंनकारयेत् एवंसंपूजयेद्देवंयावज्जीवंद्विजोत्तमाः श्रौतस्मार्तागमोक्तानांकुर्यादन्यतमक्रियाम् सूतकेमृतकेवापि
विष्णुंनित्यंतथार्चयेत् शालग्रामशिलांस्पृष्ट्वासद्यएवशुचिर्भवेत् मद्भक्तिबलमाश्रित्यमद्भक्तोदीक्षितोयदि नत्यजेन्म
मकर्माणिसूतकेमृतकेपिवा सूतकेमृतकेचैवनित्यंविष्णुंतथार्चयेत् सात्तुष्ठानस्यविप्रस्यसद्यःशुद्धिःप्रजापते जपो
देवार्चनविधिःकार्योदीक्षान्वितैर्नरैः नास्तिपापंयतस्तेषांसूतकंवाजितात्मनाम् इतिश्रीसारसंग्रहेयागसंस्कारोना
मपंचमःसंस्कारः अथभगवदाराधनक्रमोलिख्यते तदुक्तंहारीते अर्चनंमंत्रपठनंध्यानंहोमंचवंदनम्
स्तुतिर्योगसमाधिंचतथामंत्रार्थचिंतनम् एतैर्नवविधाप्रोक्तानवेज्यावैष्णवोत्तमाः योनित्यमर्चयेद्देवंयावज्जीवमतंद्रि
तः गंडकीगोमतीचक्रतुलसीताम्रभाजनम् घंटानादंशंखतोयंअष्टमंचानुलेपनम् सर्वेषामप्यलाभेतुशंखमेकंविशि
ष्यते शंखोदकंसदापूतमतिप्रियतरंहरेः इतिकेचिन्मन्यतेप्रपन्नानांमतेतन्नतदुक्तमनंतसंहितायाम् पंचसंस्कारयु-
क्तानांवैष्णवानांविशेषतः गृहार्चनविधानेतु शंखंघंटारवंत्यजेत् घंटानादंतथावाद्यंनृत्यगीतादिकान्यपि नैवेद्यकाले
यःकुर्याद्घोरंवनरकंव्रजेत् हयग्रीवसंहितायाम् प्रपन्नैर्नियतैर्विप्रैःमत्यहंमत्परायणैः गृहार्चनविधौशंखघंटाना-
दंचवर्जयेत् हारीते पाद्यार्घ्याचमनस्नानपात्राणिस्थाप्यपूजयेत् पूरयित्वाशुभजलपात्रेषुकुसुमैर्युतम् द्रव्याणिनि

क्षिपेत्तेषुमंगलानियथाक्रमम् द्रव्याणामप्यलाभेतुतुलसीपत्रंनिक्षिपेत् उद्धरण्यात्ततोदद्यात्पाद्यार्घ्याचमनंहरेः स्नान-
पात्रोदमादायस्नापयेत्कमलापतिम् कस्तूरीतिलकंगंधपुष्पाणिस्करणीणिच वस्त्रंचैवोपवीतंचदद्यादाभरणानिच पुन
रर्घ्यादिकंदत्वाधूपदीपौनियोजयेत् गुग्गुलंमाहिषाख्यंचशालनिर्यासमेवच अगरुंदेवदारुंचउशीरंश्रीफलंतथा ह्री
वेरंचंदनंमुस्तादशांगधूपमुच्यते गवाज्येनसमंयोज्यंदद्याद्धूपंस्रुवासितं संयोज्यवन्हिनादीपंभक्त्याविष्णोर्निवेद
येत् नैवेद्यंशक्तितःदद्यात्पायसापूपसंयुतम् शर्करामधुसंयुक्तंहविष्यंदद्यात्‌चरुच्यंवैनिवेदयेत् नीराजनंततोदत्वाताम्बूलंचनिवे-
दयेत् सर्वैश्चवैष्णवैर्मंत्रैःकुर्यात्पुष्पांजलिंततः प्रणमेच्चततोभक्त्यासाष्टांगंदक्षिणादिशि उरसाशिरसादृष्ट्यामनसाव-
चसातथा पद्भ्यांकराभ्यांजानुभ्यांप्रणामोष्टांगउच्यते अग्रेपृष्ठेवामभागेसन्मुखेवागर्भमंदिरे जपहोमनमस्कारान्नकुर्या
त्केशवालये वाराहे वस्त्रप्रावृतदेहस्तुयोनरःप्रणमेत्तुमाम् सस्त्रीत्वंजायतेमूर्खःसप्तजन्मनिभामिनी एकह-
स्तप्रणामंचएकाचैवप्रदक्षिणा अकालेदर्शनंविष्णोःहंतिपुण्यंपुराकृतम् प्रसार्यबाहूपादौचबद्धेनांजलिनासह स्तव
स्तुतिभिरित्येवप्रणामोदीर्घउच्यते आलवंदारुभाष्ये प्रणम्यकृष्णंसहसापांसुश्लिष्टेमहीतले निष्कल्मषोभवेत्
सद्योललाटेपांशुमंडनात् दुर्गसंसारकांतारमपारमभिधावतः एकःकृष्णनमस्कारोमुक्तितीरस्यदेशिकः एकोपिकृष्णा-
स्यकृतःप्रणामोदशाश्वमेधावभृथेनतुल्यः दशाश्वमेधीपुनरेतिजन्मकृष्णप्रणामीनपुनर्भवाय नमस्कारकृतोयज्ञःसर्व-

गा·सा· यज्ञोत्तमोत्तमः नमस्कृत्वामहायज्ञअश्वमेधफलंलभेत् प्रणम्यदंडवद्भूमौनमस्कारेणयोर्चयेत् सयांगतिमवाप्नोतिन· सं·
१५ तांक्रतुशतैरपि नमइत्येवयोब्रूयात् मद्भक्तः श्रद्धयान्वितः तस्याक्षयंभवेल्लोकंश्वपचस्यापिनारद हरिममरगणार्चि
ताङ्घ्रिपद्मंप्रणमतियःपरमार्थतोहिमर्त्याः तमपगतसमस्तपापपुंजंव्रजपरित्वस्ययथाग्निमाज्यसिक्तं एकोबहू-
न्दुरितानिसुदुस्तराणिभक्त्याप्रयुक्तइहचक्रधरेप्रणामः त्वदंघ्रिमुद्दिश्यकदापिकेनचिद्यथातथावापिसकृत्कृतोंज
लिः तदैवमुष्णात्यशुभान्यशेषतः शुभानिपुष्णातिनजातुहीयते इत्यादिवचनैरेकैवप्रणाम शस्तः नमस्तेनम
स्तेत्रयीनाथविष्णो नमस्तेनमस्तेनमोरंगशायिन् नमस्तेनमस्तेप्रपन्नार्तिहारिन् नमस्तेनमस्तेश्रिताभिष्टदायिन् इ
तिवदन्पुनःपुनरावृत्तिर्दृश्यतेतत्रभगवद्भक्तिप्रकर्षेपुनरुक्तिः इत्यादिषुनैवंवीप्सादिकंचदृश्यते आहूयश्चप्रशंसा
याप्रतिज्ञायांप्रलापने तर्जनेभयविस्मयेपोनःपुन्यमलंकृतिः हारीते यःशास्त्रेषुनिषिद्धस्तुतंप्रयत्नेनवर्जयेत्
भावदुष्टंकालदुष्टंक्रियादुष्टंतथैवच संसर्गदुष्टमपिचवर्जयेयज्ञकर्मणि रूपतोगंधतोवापियस्माःभक्ष्यसमंभवेत् भो
वदुष्टंचतत्प्रोक्तंमुनिभिर्धर्मपारगैः आरनालंचमद्यंचकरानिर्मथितंदधि हस्तदत्तंचलवणंक्षीरंघृतपयांसिच शा·
ब्देनपीतंभुक्तंचगव्यंताम्रेणसंयुतम् क्षीरेणलवणोन्मिश्रंक्रियादुष्टमिहोच्यते एकादश्यांचयच्चान्नंयच्चान्नंराहु· १५
दर्शने सूतकेमृतकेचान्नंशुष्कंपर्युषितंतथा अनिर्दशाहगोक्षीरंषण्डतैलंतथैवच नदीषुचाल्परवातेषुसिंहकर्क·

टयोर्जलम् निःशेषजलवाप्यादौयत्प्रविष्टंनवोदकम् नातीनपंचरात्रंतु कालदुष्टमिहोच्यते शैवपाषंडपतितैर्विकर्मस्थैर्नरी·
श्वरैः अवैष्णवैर्द्विजैः शूद्रैर्हरिवासरभोक्तृभिः श्वकाकशूकरोष्ट्राद्यैरुदक्यासूतिकादिभिः पुंश्चलीभिश्च नारीभिर्वृषलीप
तिभिस्तथा दृष्टंस्पृष्टंचदत्तंचभुक्तशेषंतथैवच अभक्ष्येण चसंयुक्तंसांसर्गदुष्टमुच्यते बिंबंशिग्रुंचकालिंगंतिलपिष्टंचमू
लकं कोशातकीमलाबुंचपीलुंश्लेष्मातकंफलम् नालिकानारिकेलादिजातिदुष्टमिहोच्यते॥ एवंसर्वाण्यभक्ष्याणि तत्संस
र्गांश्चसंत्यजेत् कोद्रवंचोलकोलस्थंयावनालंतथाशितम् निष्पावांश्चमसूरांश्चतुच्छधान्यादिसंभवम् भुक्तपर्युषितंरू
क्षंयज्ञकर्मणिवर्जयेत् वर्जयेदारनालंचमद्यमांससमानिच निर्यासान्वर्जयेत्सर्वान्विनाहिंगुंचगुग्गुलुम् कलविंकांच
निर्गुंडींसुंडींवार्ताकमेवच पीयूषलवणंपुष्पंभूस्तृणंभौतिकंतथा अनिर्दशाहगोक्षीरमवत्सायास्तथामृतम् औष्ट्रमैक·
शफंचैवप्रसूतंविड्भुजामपि तोमेणसंयुतंगव्यंक्षीरंचलवणान्वितम् घृतलवणसंयुक्तमयत्नेनविवर्जयेत् पालिकंद्रो
णशाकंचश्वेतवृंताकमेवच वंशांकुरंकोविदारंदूरतःपरिवर्जयेत् कुंभीकंचुकपिण्याकघृतंकोशातकीतथा मूलिकंचबिंबफलंमद्यमांससमानिच
च स्पृष्टंचंद्रिकायाम् बिंबंचश्वेतवृंताकमलाबुंवर्तुलंतथा छत्राकंचबिंबफलंलशुनंचैवसुद्रिदं· तिलपिष्टमलाबुंचकालिंगंशिग्रुगृंजनं :
छत्राकंचबिंबफलंघनकोशातकींत्यजेत् याज्ञवल्क्यः पात्रमध्येयथापानंहस्तमध्येयथाघृतम् आपोशनंविनाभुक्तंत्रयंगोमांसभोजनं
नालिकेरजलंपीत्वाकांस्यमध्येमधुस्तथा ताम्रपात्रेपयःपीत्वासुरापानसमंभवेत् अश्वारूढेगजारूढेरथारूढेकपाणि·

ना संध्याशीर्षजलंपीत्वापंचतोयंसुरासमम् शौचांतपादशौचांतेनर्पणांतेचयज्जलम् हस्तेहस्तमधोहस्तात्पंचतोयंसुरा
समम् अमृतंब्राह्मणस्यान्नंक्षत्रियान्नंपयः स्मृतम् वैश्यअन्नंतुचान्नंस्यात्शूद्रान्नंरुधिरंस्मृतम् शूद्रोदकंशूद्रपक्वंशूद्रेण
सहभोजनम् इहजन्मनिशूद्रत्वंचांडालःकोटिजन्मसु अतुच्छिष्टेतुलवणमुच्छिष्टेघृतमेवच वामहस्तेभुविस्पृश्य-
तुल्यंगोमांसभक्षणम् मूत्रंकृत्वाविनाशौचंकच्छांवध्वाद्विजाधमः कच्छान्विनोमूत्रयित्वासमूढोनरकंव्रजेत् तैलाभ्यं
गेचितादाहेमैथुनेक्षौरकर्मणि स्नानंयावन्नकुर्वीततावच्चांडालउच्यते पाराशरस्मृतौ। लवणंमधुतैलंचदधि
तक्रंगुडपयः नदुष्येच्छूद्रजातीनांकुर्यात्सर्वेषुविक्रयम् हरिद्रागोरसंचूर्णंघृतमोषधमेवच नतेषांपापकीदोषोक्रमु
कस्यगुडस्यच इक्षूनपःफलमूलंताम्बूलंपयओषधम् भक्षयित्वापिकर्तव्याःस्नानदानादिकाःक्रियाः अभक्ष्यभक्ष-
मित्याहुस्तिलसर्षपसैथुनम् विनामद्यंचमांसंचगृंजनलशुनद्वयम् प्रजापतिस्मृतौ उदक्यायासमीपस्थमन्नमा
द्यात्प्रमादतः उपवासत्रयंकुर्यानात्यंकृच्छ्रंसमाचरेत् उदक्यास्पृष्टतस्स्पृष्टमन्नंभक्त्वातुकामतः प्राजापत्येनशुद्धिःस्या
दज्ञानेनत्रिरात्रतः पाराशरेपूर्वखंडे योवेष्टितशिराभुंक्ते योभुंक्तेदक्षिणामुखः वामपादेकरंन्यस्यतस्यराक्षसभो
जनम् अथभगवदाराधनेपत्रनिर्णयः तदुक्तंहारीते पलाशपद्मपत्रंतुग्रहीयत्नेनवर्जयेत् यतीनांचवना १६
स्थानांपितृणांचशुभप्रदम् वटाश्वत्थार्कपर्णानिकुंभीतिंदुकयोस्तथा एरंडनालपत्राणिकोविदारकरंजकम् भल्लात

कस्यपर्णानिएतानिपरिवर्जयेत् मोचागर्भपलाशंचवर्जयेत्सर्वकर्मसु मधुकंकुटजंचैवब्राह्म्यंप्लक्षमुदुंबरम् मातुलिंगं
पानसंचमोचाआम्रफलानिच फलारव्यपर्णर्म्नापर्णशुभानिमानिबोधमे पलाशपद्मिनीचूतंकदलीहेमराजतम् म
धुपत्रेषुयोभुंक्ते ग्रासमेकंचगोफलम् सदंडंकदलीपत्रंवामभागाग्रसंयुतम् निर्दंडंचनिरग्रंचपशुचर्मसमंभवेत् करे
कार्पासकेचैवआयसेताम्रभाजने घटा कांश्वत्थपत्रेषुफक्काचांद्रायणंचरेत् मनुस्मृतौ नागवल्लिदलंतोयंयत्तोयं
फलपुष्पयोः तैलतक्रेषुयत्तोयंनदोषोमनुरब्रवीत् मूषिकामक्षिकाचैवस्त्रीमुखंवेदबिंदुच शूद्रभांडकृतंतक्रेनदोषो
मनुरब्रवीत अथभगवदाराधनेसमयेनिषिद्धपुष्पत्यागः नशुष्कैःपूजयेद्देवंनपुष्पैर्धरणीगतैः नविशीर्णद-
लैर्जुष्टैःनाशुभैर्नाविकाशिभिः पूतिगंधीन्यगंधीनिअम्लगंधीनिवर्जयेत् नाघ्रात्वकरवीरैश्चकुरुभैरर्चयेद्धरिम् पति-
तैर्मुकुलैर्म्लानैःशवासेर्वाजंतुदूषितैः आघ्रातैरंगसंस्पृष्टैर्दूषितैश्चनार्चयेत् समित्पुष्पकुशादीनिब्राह्मणःस्वयमाहरेत्
शूद्रानीतैःक्रयक्रीतैःकर्मकुर्वन्व्रजेदधः करानीतंपरानीतंशूद्रानीतंतथैवच एरंडपत्रेणानीतंपत्रपुष्पंविवर्जयेत् गारु
डे तुलसींप्राप्ययोनित्यंनकरोतिममार्चनम् तस्याहंतुनगृण्हामिपूजांचशतवार्षिकीम् स्कांदे नविप्रसदृशंपात्रंन
दानंसुरभीसमम् नचगंगासमंतीर्थंनपत्रंतुलसीसमम् मणिकांचनपुष्पाणितथामुक्ताफलानिच तुलसीपत्रदान
स्यकलांनार्हंतिषोडशीम् अभिन्नपत्रांहरितांहृद्यमंजरिसंयुताम् क्षीरोदार्णवसंभूतांतुलसींहरयेर्पयेत् विष्णुध

मोंतरे नछिंद्यात्तुलसीपत्रं ह्नादश्यां वैष्णवः क्वचित् यश्छिंदेत प्रमादेन तेन छिन्नं हरेः शिरः देवार्थे तुलसी छेद्या होमार्थे 
समिधस्तथा इंदुक्षयेन दुष्येत गवार्थे च तथा तृणम् श्रीशस्याराधनार्थाय कुर्यात्पुष्पस्य संचयम् तुलसी बिल्वपत्राणि दू-
र्वा कौशेयमेव च विष्णुक्रांता मरुबकं करुवेल दमनं तथा उशीरं जातिकुस्कमं कुंदं चैव करंडकम् शमीचंपकदंबं च चूतपुष्पं
चमाधवी पुन्नागं बकुलं नागकेसराशोकमल्लिका शतपत्रं च हारीतं करवीरं प्रियंगु च नीलोत्पलं समदलासंध्यावर्तं च केतकं
घटजं स्थलपद्मं च सर्वाणि जलजानि च तत्तत्कालोद्भवं पुष्पं गृहीत्वा गृहमाविशेत् अरुणोदयवेलायां निर्माल्यं शल्यतां व्रजेत्
मायस्तस्यां महाशल्यं घटिकामात्रयोगतः अतिशल्यं विजानीयात् कृतो वज्रप्रहारवत् अरुणोदयवेलायां शल्यं न क्षमते हरिः
घटिकायामपिक्रांतो क्षुद्रपातकमावहेत् मुहूर्ते सम्प्रतिक्रांते पूर्णपातकमुच्यते अतिपातकमेव स्यात् घटिकानां चतुष्टये प्रह-
रे सम्प्रतिक्रांते प्रायश्चित्तं न विद्यते अथ द्वात्रिंशदपराधा विलिख्यंते यानैर्वा पादुकैर्वापि गमनं भगवद्गृहे दीपोत्सवे
पाद्यसेवा अप्रशस्तो मदयतः उच्छिष्टे चैकवासो च भगवद्वंदनादिकम् एकहस्त प्रणामं च यत्तस्मेः स्मिन्प्रदक्षिणम् यत्पुरो
दंडपातश्च यच्च तांबूलमग्रतः पादप्रसारणं चाग्रे तथा पर्यंकबंदनम् शयनं भक्षणं चैव मिथ्याभाषणमेव च उच्चैर्भाषा मिथो
जल्पो रोदनं चैव विग्रहः निग्रहानुग्रहश्चैव नृषु च क्रूरभाषणम् इष्टे कृत्वासनं चैव परेषामभिवादनम् गुरोर्मौनं निजस्तोत्रं 
देवब्राह्मणनिंदनम् कंबलावरणं चैव परनिंदा परस्तुतिः अश्लीलभाषणं चैव अधोवायुविमोचनम् तत्तत्कालोद्भवानां च फ

लादीनामनर्पणम् अपराधाइमेविष्णोर्द्वात्रिंशत्परिकीर्तिताः यत्नतोवर्जनीयास्तेविष्णुपूजनतत्परैः अथभगवदा
राधनेआवरणप्रकारोलिख्यते तदुक्तंपाराशरे श्वानवायसचांडालदृष्टिदोषंपरित्यजेत् प्रपन्नपरमैकांति
भोजनेपाककर्मसु चांडालाः शाक्तकाः शैवास्तथाभैरवपूजकाः येप्यन्यदेवताभक्तास्तेषांदृष्टिंविवर्जयेत् अत्यष्ण-
मतिरूक्षंचपक्वंपर्युषितंतथा आघ्रातमितरैर्दृष्टंप्रयत्नेनविवर्जयेत् विष्णोर्नैवेद्यकालेषुचैलावरणमाचरेत् त्यक्त्वावृ-
र्णंपचेदन्नंसमूढोनरकंव्रजेत् आवर्णयःपरित्यज्यनैवेद्यंकुरुतेयदि सचांडालोमहापापीरौरवंनरकंव्रजेत् जैनबौ
द्धादिकंसम्यक्श्वानमार्जारवायसैः देवतांतरभक्तानांदृष्टिदोषंपरित्यजेत् नैवेद्यपाककालेचभोजनेचविशेषतः अ-
सद्दृष्टिंपरिहरेदच्युतस्यनिवेदने काकंदृष्ट्वाप्रपन्नश्चनाश्नीयाल्लोभतोपिवा अवैष्णवानांदृष्टंचभोजनंवैष्णवस्त्यजेत्
पाराशरे एकशय्यासनंपंक्तिभांडपक्वान्नमिश्रितम् यजनाध्यापनेयोनिस्तथैवसहभोजनम् नवधासंकरःप्रोक्तोन
कुर्याच्चाधमैःसह वर्जयेद्दुग्धवापाकमनर्चककृतंतथा अधमान्नंतथासम्यक्वर्जयेत्सर्वकर्मसु पंचसंस्काररहिताःशि
खाकौपीनवर्जिताः वैष्णवाचाररहिताअनर्चकइतिस्मृताः मोक्षधर्मे ननग्नामीक्षतेनारींननग्नान्पुरुषानपि
मैथुनंशयनंगुह्यमाहारंचसमाचरेत् सायंप्रातर्मनुष्याणामशनंदेवनिर्मितम् नांतराभोजनंदृष्टिउपवासंतदाचरेत्
पाखंडपतिताशूद्राविकर्मस्थाःनवीक्षितम् अचक्रांकैरमर्यादैर्वैष्णवैरपिनेक्षितम् हारीते पैशाचिकानांयक्षाणां

सा शाक्तानांलिंगधारिणां द्वादशीविमुखानांचदृष्टिदोषंविवर्जयेत् अवैष्णवानांदृष्टिःस्यात्साकपात्रेतथाजले नसाकंतुपरित्य स
१८ ज्यपात्रशुद्धिंचकारयेत् ब्रह्मघ्नोथसुरापीचशूद्रश्चांडालपाचकाः अचकांकीचम्लेच्छश्वससत्योगोपयेन्मुने स्कंदर्शनसं
हितायाम् नीलाद्रौचित्रकूटेचव्रजेशेषेहिमालये अनर्वैधोतथाराजन्दृष्टिदोषोनविद्यते वृद्धवासिष्ठे पूजाने
वेद्यकालेषुयागद्रव्याण्यशेषतः तिरोधायचवस्त्रेणअलक्ष्याण्यहृतैर्यथा जयसंहितायाम् पिदधीततथाक्षेत्र-
आयागास्साकभूमयः वस्त्रपर्णकुशाद्यैर्वायथालक्ष्यमवैष्णवैः वृद्धपाराशरे विष्णुरीज्यांसवैकुर्याद्योवनिवसना
दिभिः पूज्यतेहरिरव्यक्तस्त्वलक्ष्यास्समादृते विप्रोवावैष्णवोवास्यादन्नपाकादिकर्मसु तिरस्कुर्याद्विधानेननान्यथा-
हरिरिज्यते यागभूमौचयागान्नपाकयोगादिकर्मसु तिरस्कुर्याद्धुदतेषांनान्यथाशुद्धिमाप्नुयात्अभक्ष्यं तथाक्षेत्र
यागदोषःकरोतिसः सिद्धिंनैवसमाप्नोतिभक्तलभ्यतोभवेत् अथभगवदाराधनेवस्त्रधारणक्रमः छिन्नंवासं
धितंदग्धमाविकंचनदुष्यति आविकेनतुवस्त्रेणमानवःश्राद्धमाचरेत् गयाश्राद्धसमंप्रोक्तंपितृभ्योदत्तमक्षयम् हा
रीते नकुर्यात्संधितंवस्त्रंदेवकर्मणिभूमिप नदग्धंनचवैछिन्नंपारकीयंनधारयेत् काकविष्ठासमायुक्तंनाविधूतंशु
चिर्भवेत् रजकादाहृतंवस्त्रंतद्वस्त्रंनभवेच्छुचिः कटिस्पृष्टंतुयद्वस्त्रंपुरीषंयेनकारितम् विण्मूत्रमैथुनेयद्वैतद्वस्त्रंन १८
भवेच्छुचिः आविकंतुसदावस्त्रंपवित्रंराजसत्तम पितृदेवमनुष्याणांक्रियास्वेतत्प्रशस्यते धौताधौतंतथादग्धंसंधितंर-

जसाह्वतम् शुक्लमूत्ररक्तलिप्तं तथापिपरमःशुचिः अग्निराविकवस्त्रंतु ब्राह्मणश्चतथाकुशाः चतुर्णांनकृतोदोषोब्रह्मणापरमेष्ठिना हरिश्चर्यापाककाले धार्यपट्टांबरंसदा तस्याभावेआविकंतुतद्भावेवस्त्रमेवहि ममालयेसदाधार्यंपट्टकूलं सदाबुधैः विष्णोःपूजनकालेचपाककालेविशेषतः पट्टकूलंसदापूतंआविकंतुविशेषतः विष्णोरर्चनकालेतुधार्यंपट्टं प्रयत्नतः ऊर्णाशुध्यतिवातेनभूमिःशुध्यतिलेपनैः ब्राह्मणःकर्मणाशुध्येत्ज्ञानैःशुध्यंतियोगिनः भारद्वाजसंहितायां कौपीनंकटिसूत्रंचवस्त्रंयुग्मंचधारयेत् नकंथांजीर्णवासोवाकृशवस्त्रंनधारयेत् आविकंचसदावस्त्रं पवित्रंराजसत्तम विण्मूत्रंमैथुनंयेनकारितंनभवेच्छुचिः एककच्छोद्विकच्छोवाद्विशिखाशिखवर्जितः कंबलावरणं चैवपंचैतेनग्नकाःस्मृताः एतत्कृष्णकंबलस्यनिषेधनंतुसर्वेषां हारीते नामसवस्त्रमेकंतुराजसवसनद्वयम् कौपीनसहितंयत्तुसात्विकंमुनिभिःस्मृतम् कौपीनंकटिसूत्रंचवस्त्रस्योपरिबंधनम् यावन्नधारयेद्विप्रस्तावच्छूद्रोनसंशयः कौपीनेनविनायस्तुकर्मकुर्याच्चवैदिकं सर्वेनग्नइतिख्यातःसर्वकर्मबहिष्कृतः कौपीनंकटिसूत्रंचवस्त्रयुग्मंचधारयेत् धारयेदूर्ध्वपुंड्रांस्तु सच्छिद्रानेवदेशिकः इषद्धौतंनवंश्वेतंसदशंयन्नधारितं अहतंतद्विजानीयाद्देवेपैत्रेचकर्मणि पंचभिःसप्तभिर्वापित्रिगुणैःकार्पासनिर्मितैः इदंनव्यमिदंप्रोक्तंकटिसूत्रस्यलक्षणं अन्यत्र कर्णेपुष्पंकटौसूत्रंवेणीशिरसिधारयेत् तावद्भवतिचांडालोयावद्धर्मानश्यति इतिकेचिद्वदंतीतितं तत्तुकेवलसूत्रधारणेनिषेधो·

मनुकटिसूमस्य अथभगवदालयेदीपदानमाहात्म्यंनृसिंहपुराणे घृतेनवैंघतैलेनदीपंयोज्वालयेन्नरः विष्णोर्वैवेश्म
निभक्त्यातस्यपुण्यमनंतकं विहायसकलंपापंसहस्रादित्यसन्निभः ज्योतिष्मताविमानेनविष्णुलोकेमहीयते उमांप्रतिरुद्र
वाक्यम् यस्तुविष्णुगृहेदीपंदत्तंदृष्ट्वानुमोदते सोपितत्फलमाप्नोतिकिंपुनर्दीपदायकः घृताभावेतुतैलंहितैलाभावेतदर्थ
दः अर्थाभावेनतस्मान्नयोदद्यात्सोपिदीपदः संमार्जनशतंपुण्यंसहस्रमनुलेपनम् मालाशतसहस्रंतुअनंतंदीपउच्यते
अथभगवदालयेमार्जनमाहात्म्यंलिख्यते विष्णुधर्मोत्तरे यस्तुचायतनेविष्णोःकुरुतेमार्जनक्रियाम् सपांसुर्व्या
सदेहस्तुसर्वपापंव्यपोहति अहन्यहनियस्तापंकुरुतेद्विजसत्तम गोचर्ममात्रसंमार्जहंतितत्केशवालये यावंतीपांसु
कणिकामार्जनेकेशवालये वर्षाणिविद्धितावंतिनिहत्यरमतेनरः स्वकिंकरान्प्रतियमवाक्यं उपलेपनकर्तारःसं
मार्जनकराश्चये विष्ण्वालयेपरित्याज्याःतेषांत्रिपुरुषंकुलम् अग्निष्टोमंतुपक्षेणवाजपेयंतुमासतः संवत्सरेणाश्वमे·
धंमार्जनेफलमुच्यते अथभगवदग्रेगीतनृत्यादिमाहात्म्यंलिख्यते श्रीपंचरात्रे श्रीपादमस्तकंभक्त्यापश्य
तःपुरुषोत्तमम् महापापानिनश्यंतिकिंपुनस्तूपपातकाः विष्णोर्गानंचनृत्यंचनटनंचतथैवच सदाब्राह्मणजातीनांक
र्तव्यंनित्यकर्मवत् नृत्यताश्रीपतेरग्रेकरसंस्फोटनादिभिः उड्डीयंतेशरीरस्थामहापातकपक्षिणः नास्तिनास्तिमहाभा
गकलिकालसमंयुगम् स्मरणात्कीर्तनाद्विष्णोःप्राप्यतेपरमंपदम् लब्ध्वातुमानुषंदेहंपंचभूतसमन्वितम् मयिभक्ति

नकुर्वंतिततोदुःखतरंनुकिमिति वाराहपुराणेभगवद्वचनम् तथाचात्तुस्मृतोभगवद्वचनम् नाहंवसामिवैकुंठेयोगीनांहृ
दयेनच मद्भक्तायत्रगायंतितत्रतिष्ठामिनारद श्रीमद्भागवतेप्रथमेनारदवाक्यम् तद्वाग्विसर्गोजनताघविप्लवोयस्मिन्प्रति
श्लोकमबद्धवत्यपि नामान्यनंतस्ययशोंकितानियच्छृण्वंतिगायंतिगृणंतिसाधवः सांकेत्यंपारिहास्यंवास्तोभंहेलनमेववा
वैकुंठनामग्रहणमशेषाघहरंविदुः पतितःस्खलितोभग्नःसंदष्टस्तप्तआहतः हरिरित्यवशेनाहपुमान्नार्हतियातनाम् स्तेनः
सुरापोमित्रध्रुक्ब्रह्महागुरुतल्पगः स्त्रीराजपितृगोहंतायेचपातकिनोपरे सर्वेषामप्यघवतामिदमेवसुनिष्कृतम् नामव्याहृ
रणंविष्णोर्यतस्तद्विषयामतिः तत्रैवनारदवाक्यम् प्रगायतःस्ववीर्याणितीर्थपादप्रियश्रवाः आहूतइवमेशीघ्रंदर्शनंया-
तिचेतसि॥ गृहंप्राविशतांवापिपुंसांकुशलकर्मणाम् मेहातोयातयामानांनबंधायगृहामताः सप्तमेश्रीशुकवाक्यम् जिह्वांल-
ब्ध्वापियोविष्णुंकीर्तनीयंनकीर्तयेत् लब्ध्वापिमोक्षनिःश्रेणींसनारोहतिदुर्मतिः एकादशेकरभाजनवाक्यम् कलिंस-
भाजयंत्यार्यागुणज्ञाःसारभागिनः कीर्तनेनैवकृष्णस्यसर्वस्वार्थोभिलभ्यते कलेर्दोषनिधेराजन्नस्तिह्येकोमहान्गुणः कीर्त-
नादेवकृष्णस्यमुक्तबंधःपरंव्रजेत् कृतेयद्ध्यायतोविष्णुंत्रेतायांयजतोमखैः द्वापरेपरिचर्यायांकलौतद्धरिकीर्तनात् अथश्री-
पादमाहात्म्यंलिख्यतेब्रह्मांडे त्रिषुलोकेषुयत्तीर्थंतेषुस्नानेषुयत्फलम् विष्णुपादोदकंमूर्ध्नाधारयेत्सर्वमाप्नुयात् मानवोय
स्तुगंगायांस्नानंपानंसमाचरेत् तस्ययादृक्भवेत्पुण्यंतादृक्पादांबुधारणात् पृथिव्यायानितीर्थानिप्रयागपुष्करादिकम् त-

ग.सा. सादृयुग्मेकृष्णस्यतत्प्रतिघंतिनित्यशः हृदिरूपंमुखेनाम नैवेद्यमुदरेहरेः पादोदकंचनिर्माल्यंयस्यमूर्धिसवैष्णवः भागवते सं.
४० पादोदकस्यमाहात्म्यंजानात्येवाहिशंकरः विष्णुपादोदकंपीत्वाशंकरंद्धमाप्नोतितत्क्षणात् स्नानपादोदकेयापिपिबनशिरसिधारये-
त् पुण्यपापविनिर्मुक्तोवैष्णवींगतिमाप्नुयात् विष्णुगात्रेणसंस्पृष्टंपद्मंवापुष्पमेववा शिरसाधारयेद्योवैसयातिहरिमंजसा पा-
दोदकंपिबेन्नित्यंचक्रांकितशिलाहरेः प्रक्षाल्ययत्निनतोयंब्रह्महत्यादिकंहरेत् पीतेपादोदकेविष्णोर्वैष्णवानांविशेषतः तत्रमा-
चमनंकुर्याद्यथासोमेद्विजोत्तमैः तीर्थप्रसादस्वीकारानंतरंवैष्णवोद्विजः नहस्तक्षालनंकुर्यात्नतत्राचमनक्रिया पद्मपुराणे
संसारमलपंकस्यविष्णुपादोदकंविना प्रक्षालनंनपश्यामिकल्पकोटिशतैरपि विष्णुश्रीपादतीर्थंहिकोटिजन्माघनाशनम् तदे-
वाष्टगुणंपापंभूमौबिंदुनिपातनात् परमाणुसमंतीर्थंयावत्संपततेभुवि तावद्वर्षसहस्राणिपतंतिनरकेनराः वस्त्रंचद्विगुणीकृत्य-
पाणौपाणिंनिवेशयेत् तस्मिन्तीर्थंप्रतिग्राह्यभिःपिबेद्विंदुवर्जितम् अथभगवत्प्रसादमाहात्म्यंलिख्यते तत्रादौश्रुतिःम-
हापनिषदि विष्णुनाभातमश्नंति विष्णुनाघ्रातंजिघ्रंति विष्णुनापीतंपिबंतिविष्णुनारसितंरसयंति तस्माद्विद्वांसोविष्णूपभुक्तं
भक्षयेयुरिति श्रीपद्मपुराणे विष्णोर्नैवेद्यकंशुद्धंमुनिभिर्मोक्षकांक्षिभिः अन्यदेवस्यनैवेद्यंभुक्त्वाचांद्रायणंचरेत्
विष्णुदेहपरामृष्टंमाल्यंपापहरंशुभम् योनरःशिरसाधत्तेसयातिहरिमंजसा नैवेद्यमन्नंतुलसीविमिश्रंविशेषतःपादजले- २०
नसिक्तं योश्नातिनित्यंपुरतोमुरारेःप्राप्नोतियज्ञायुतकोटिपुण्यं विष्णोर्निवेदितंचान्नंयोश्नातिभुविमानवः सयातिपरमंस्थानंपु

नराद्यन्निवर्जितम् पाद्मे भक्त्यालोभात्कौतुकाद्वाक्षुधासंशमनेपिवा आकंठंभक्तितंयद्वैपुनातिसकलादघात् ममान्नं
निक्षिपेद्यस्तुममनिंदांकरोतियः मद्दर्शनेनयत्पुण्यंतत्सर्वंतस्यनश्यति विष्णोर्निवेदितान्नंयोनाश्नातिस्पर्शशंकया वायसोवि
ड्वराहश्चाविष्ठायांजायतेकृमिः परमेष्ठिसंहितायाम् विष्णुनैवेद्यंसंत्यज्ययःकुर्यादन्नभक्षणम् सयातिनरकंघोरंयाव
च्चंद्रदिवाकरौ स्कंदपुराणे तीर्थैःपवित्रितोवापितपस्वीवाजितेंद्रियः नारायणस्यनैवेद्यमभुक्त्वापतितःक्षणात्
नारदीयेपि नारायणस्यनैवेद्यंविप्रहत्याविनाशनं नदेवाष्टगुणंपापंभूमौकणनिपातनात् वाराहपुराणे मदन्नत्य
जिनंमूढनथामद्भक्तदूषकं कल्पकोटिशतेनापिनक्षमामिकदाचन दौल्भ्यः अन्नपानादिकंविष्णोःप्रसादंनित्यसेवनं
सर्वाघनाशनंसर्वपुण्यदं मुक्तिदंशुभं विष्णोर्निवेद्यमश्नीयाद्वैष्णवस्तुविशेषतः शतजन्मकृतपापंतत्क्षणादेवनश्यति वि-
ष्णोर्निवेद्यंदूष्यंतियेनरामूढचेतसः शुनांयोनिशतंप्राप्यपुनःसूकरतामियात् पंचरात्रे यःश्राद्धकालेहरिभुक्तशेषंददा-
तिभक्त्यापितृदेवतानाम् तेनैवपिंडांस्तिलैर्विमिश्रान्तत्कोटिकल्पंपितरःसुतृप्ताः विष्णोर्निवेदितान्नेनयष्टव्यंदेवतांत
रम् पितृभ्यश्चापितद्देयंतदानंत्यायकल्पते श्राद्धेहोमेतथाभक्ष्येउपहारेतथैवच नदूष्यंवैष्णवान्नंचपचेद्भक्त्यायथाविधि
भारद्वजः योनदद्याद्धरेर्भुक्तंपितॄणांश्राद्धकर्मणि अश्नंतिपितरस्तस्यविण्मूत्रंतुसहाद्विजैः विष्णोर्निवेदितंनित्यंदेवेभ्योजु
हुयाद्धविः पितृभ्यश्चविशेषेणसर्वमानंत्यमश्नुते विष्णवेकल्पितंचान्नंदद्याद्भक्तेभ्यएवच वैश्वदेवंततःकुर्यात्श्राद्धकर्मादिकं

तथा हरिभक्तिशेषंतद्दद्यात्सिनृणांचदिवौकसां तदेकजुहुयादग्नौभुंजीयाच्चस्वयंनरः यदालभेत्स्वसिद्धान्नंभुंजीतमोक्ष्यमेवत
न् विष्णुभक्तमितिध्यात्वासात्विकस्तविशेषतः वसिष्ठस्मृतौ स्वयंव्यक्तादिस्थानानिश्रीरंगंव्यंकटादयः मद्भक्तशेष
मानीयगृहबिंबंनिवेदयेत् उशनाआह ग्रामप्रतिष्ठाशेषंतुगृहार्चायांनिवेदयेत् ततोतर्यामिनेदद्यात्स्वयंभुंजीतवैष्ण
वः प्राणेभ्योजुहुयादन्नमन्निवेदितमुत्तमम् ममापिहृदयस्थस्यपितृभ्यश्चविशेषतः स्रक्चंदनादितांबूलंयोभुंक्तेनार्पि
तंहरेः कल्पकोटिसहस्राणिरेतोविण्मूत्रभुग्भवेत् अनिवेदितमन्नाद्यंयोभुंक्तेमूढचेतसा श्वानविष्ठासमंचान्नंपानंतत्सुरया
समम् पत्रंपुष्पंफलंतोयमन्नपानाद्यमौषधं नार्पयंतीचयेविष्णोस्तेत्यंगोमांसभक्षणम् हारीते ब्रह्मचारिगृहस्थ-
श्चवानप्रस्थोथभिक्षुकः पावनंभगवद्भुक्तंभुंजतेचाग्रभोजनम् भृगुसंहितायाम् उपवासव्रतानांचभक्तानांब्रह्म-
चारिणाम् विष्णुतीर्थंप्रसादंचस्वीकुर्याद्भक्तियोगतः रसगंधादिलोभेनस्वीकुर्याद्भक्तिकंटकः विष्णुरहस्ये मंत्रपूत
हिनैवेद्यंनिषिद्धायददातियः सिद्धोपिपातकीनित्यंपारुरुक्षस्तकिंपुनः भारते अंत्यजायतयोदद्याद्विष्णुशेषंहविः प्र
भं निरयंसमहाघोरंरौरवंप्राप्नुयान्नरः भगवद्भक्तिहीनस्यनैवेद्यंविषमुच्यते भगवद्भक्तियुक्तस्यतदेवअमृतंभवेत् वाराहे विष्णोरुच्छि
ष्टदातव्यंनाभक्तायकदाचन दानाप्रतिगृहीताचउभौनरकभाजिनौ भागवतेउद्धववचनं त्वयोपभुक्तस्रग्गंधवासोलंकारचर्चि
ताः उच्छिष्टभोजिनोदासास्तवमायांजयेमहि पंचरात्रे अवैष्णवानांपक्वान्नंपतितान्नंतथैवच अनर्पितंतथाविष्णोः श्व

मांससदृशंभवेत् दत्तात्रेयः निर्माल्यंभक्षयित्वैवमुच्छिष्टमगुरोरपि मासंपयोव्रतोभूत्वाजपन्नष्टाक्षरंसदा ब्रह्मकूर्चेन-
तोपीत्वापूतोभवतिमानवः प्रसादंषड्विधंप्रोक्तंअनुज्ञातंकदाक्षिनम् हस्तदत्तंमुखघ्रातंभांडोच्छिष्टंतथैवच उत्तरापोशना-
त्पूर्वदत्तोच्छिष्टंतुपावनम् वन्नेव निर्माल्यनैवसंभक्षेत्कूपेसर्वंचनिक्षिपेत् स्वीकुर्याद्यदिसंमोहाद्रौरवंनरकंव्रजेत्
मक्षिकापादमात्रंतुनिर्माल्यंनस्पृशेत्क्वचित् यदिस्पृशेत्समोहाद्वैनरकेषुनिमज्जति शिवपुराणेरुद्रवाक्यम् पूजांकुर्या
च्चिसंध्यंतुतथाभक्तिमचंचलाम् मृगतीर्थप्रसादंचनैवेद्यंपरिवर्जयेत् अनर्हंममनैवेद्यंपत्रंपुष्पंफलंजलम् निवेद्यभक्त्या
भक्ष्यंतत्सर्वंकूपेविनिक्षिपेत् धर्मशास्त्रेपि पत्रंपुष्पंफलंचान्नंमहादेवसमर्पितम् नात्मीयात्परिगृह्णेतन्निरवनेद्वाजले
क्षिपेत् वायुपुराणे जिह्वाचापल्यसंयुक्तःद्विजःसंस्कारवर्जितः शिवनिर्माल्यभोजीचरौरवंनरकंव्रजेत् अनर्चक
द्विजातीनांतीर्थपानसुरासमम् प्रसादंमांसतुल्यंस्याच्चंदनंरुधिरंस्मृतम् अवैष्णवंघृतंतक्रंप्रपन्नोमद्यवत्त्यजेत् अवैष्ण-
वान्नंतच्छेषंवैष्णवोमांसवत्त्यजेत् विष्णवर्चारहितेग्रामेविष्णवर्चारहितेगृहे नकुर्यादन्नपानादिनतत्रदिवसंवसेत् वर्जये
दन्यदेवानांमालाद्यायुधसर्पणम् तथागोपुरहर्म्यंचनास्त्यादिरवलोकनम् गीतवादित्रपटहशब्दानांश्रवणंतथा कर्माणि
चसमस्तानिवाद्यानिचेतराणिच हारीते देवतांतरचिह्नैरंकितंवस्त्रादिकमपिनग्राह्यंवैष्णवैरत्र प्रयत्नेनवर्जयेत् अ
न्यचिह्नांकितंवस्त्रभूषणासनभाजनम् वृक्षान्यशून्कूपगृहंसर्वंचपरिवर्जयेत् अवैष्णवस्यहस्तान्नंदिव्यदेशादुपागतम्

हरेःप्रसादंतीर्थंचप्रयत्नेनविवर्जयेत् वैष्णवान्नंसदाश्नीयाद्विष्णुसायुज्यहेतवे वैष्णवान्नंत्यजेद्योवैसयातिनरकंध्रुवम् सदा
चविष्णुशुश्रूषांगुरुसेवांतथैवच सदावैष्णवसेवांचकुर्यान्मोक्षार्थचिंतकः अथभगवदाराधनेऽसदस्पर्शनिषेधोलि-
ख्यते तदुक्तंषड्त्रिंशन्मते दीपंसूपंतथाशय्यांपादत्राणंचमार्जनीम् स्नानांतेयःस्पृशेद्विप्रःपुनःस्नानेनशुद्ध्यति
काकश्वखरवराविट्क्रोडताम्रचूडरजस्वला व्रात्यांत्यपतितान्पश्यंस्ततोनोपस्पृशेद्बुधः दीपाग्निंदीपतैलंचभस्मचास्थिरजस्व-
लाम् एतानिब्राह्मणःस्पृष्ट्वासवासाजलमाविशेत् देवाजीवी. भिषक. शूद्रांश्चांडालान्गुरुपातकान् पश्यन्नोपस्पृशेद्धीमा
नन्यान्संकरजानपि योलुब्धोनास्तिकःक्रूरोपिशुनोविषयात्मकः सर्वतीर्थेष्वपिस्नातःप्रायोमलिनएवसः मनुस्मृतौ दि
वाकीर्त्यमुदक्यांचपतितंसूतिकांस्तथा शवंतत्स्पर्शिनंचैवस्पृष्ट्वास्नानेनशुद्ध्यति गौतमस्मृतौ चांडालसूतिकोदक्या
पतिताःशवएवच एतेषांस्पर्शनादेवसचैलंस्नानमाचरेत् वसिष्ठस्मृतौ रजस्वलासूतिकांचश्वानंकाकंचगर्दभ-
म् कुक्कुटंविड्वराहंचपूयपाखंडिनस्तथा बहिर्देवालकान्स्पृष्ट्वासवासाजलमाविशेत् देवालकंनाम गणेशंभैरवंदु
र्गांरुद्रादीनुग्रदेवतान् योर्चयेद्भक्तिमान्विप्रःसवैदेवालकःस्मृतः वेदवेद्यंब्राह्मणेशंभक्तप्रियंहरिम् योर्चकोब्राह्म
णश्रेष्ठनचदेवालनामकः अथातुरविषयम् आतुरेस्नानसंप्राप्तेदशकृत्वोह्यनातुरः स्नात्वास्नात्वास्पृशेदेनंत- २२
तःशुद्ध्येत्सआतुरः अपरार्कादर्शे असामर्थ्याच्छरीरस्यवैषम्याद्देशकालयोः स्नानान्यन्यानितुल्यानिमानसंश्रेष्ठ-

शुध्यते आपःस्वभावतोमेध्याः किंपुनर्वन्हितापिताः तेनसंतःप्रशंसंतिस्नानमुष्णेनवारिणा प्रक्षाल्यपादौहस्तौचआच-
म्यचततःपरम् अंतेचवाससस्त्यागस्ततःशुध्येत्सुआतुरः. अथश्रीविष्णूत्सवेविस्पर्शदोषः तदुक्तंहारीते उत्सवे-
वासुदेवस्ययःस्पातिस्पर्शशंकया पतितःसनरश्चैवरौरवंनरकंव्रजेत् पराशरस्मृतौ उत्सवेवासुदेवस्यावीथ्या
संमार्जनेकृते उच्छिष्टभस्मकेशास्थिस्पृष्ट्वास्नानमाचरेत् वाराहे संध्योपास्तिंकरिष्यंतिद्विजाविष्णुपराङ्-
मुखाः रौरवंनरकंप्राप्यचांडालींयोनिमाप्नुयुः नानुव्रजतियोमोहाद्दुर्मतिर्हरिमुत्सवे ज्ञानाग्निदग्धदेहोपिवसतेन
रकेध्रुवो स्कांदे येऽर्चयंतिदेवेशंसुपर्णोपरिसंस्थितम् किंकरिष्यंतितेतीर्थैर्देवतानांचदर्शनैः किंयज्ञैःकिंव्रते
र्वापिकिंदानैःकिंमुपोषणैः मूर्तिनारायणीयत्रपश्यंतिगरुडोपरि तत्रैवभगवद्वचनम् मन्निमित्तंकृतंकर्मकर्म-
लोपोभवेद्यदि तत्कर्मकुरुतेनित्यंतिस्राःकोट्योमहर्षयः मन्निमित्तंकृतंपापंसद्धर्मायचकल्पते मामनादृत्यधर्मोपिपा
पंस्यान्मत्प्रभावतः पाद्मेभृगुवचनम् सकर्तासर्वधर्माणांभक्तोयस्तवकेशव सकर्तासर्वपापानांयोनभक्तस्तवा-
च्युत वैश्वानरक्रियाधिकारे उत्सवेवासुदेवस्ययःस्पातिस्पर्शशंकया स्वर्गस्थाःपितरस्तस्यपतंतिनरकेक्षणा-
त् विष्ण्वालयसमीपस्थान्विष्णुसेवार्थमागतान् चांडालान्पतितान्व्रात्यान्स्पृष्ट्वास्नानमाचरेत् विष्णुधर्मोत्तरे
विष्णोरथ्यासुयायांतिमंदिरेचोत्सवेगते दर्शनाकांक्षिणःसर्वेअस्पृश्याश्चापिमानवाः सर्वेदेवसमानावैकथितामुनिसत्

तमाः तान्संस्पृश्यात्तु यः स्नानं कुर्वन्स नरकं व्रजेत् तथैव षट्त्रिंशन्मते देवयात्राविवाहेषु यज्ञेषु प्रकृतेषु च उत्सवेषु च स
र्वेषु स्पृष्टास्पृष्टिर्न विद्यते तीर्थे विवाहयात्रायां संग्रामे देशविप्लवे नगरग्रामदाहे च स्पृष्टास्पृष्टिर्न विद्यते अथ भगवदाराधने यु
गलमालाधारणावश्यकलिख्यते भारद्वाजसंहितायाम् पूजाकाले हरिध्याने संध्यादिवंदने तथा तुलसी धार्यते कंठे ते भ
क्ता हरिवल्लभाः श्रवणे कीर्तने चैव मंत्रजाप्ये च वैष्णवैः धार्यते तुलसी कंठे महाभागवतोत्तमैः सदा संधारयेद्यस्तु तुलसीमणिमा
लिकाम् भूतप्रेतपिशाचास्तु वर्तते न समीपतः न धारयंति ये मालां तुलसीकाष्ठसंभवाम् विष्णुकोपाग्निना दग्धास्ते यांति यमम
दिरम् मार्कंडेये अष्टोत्तरशतेनैव तुलसीकाष्ठसंभवाम् कंठादिनाभिपर्यंतं धारयेद्वैष्णवोत्तमः ब्रह्मांडपुराणे प
द्माक्षमालाविप्राणां धारणीया प्रयत्नतः जपहोमार्चनाद्येषु विशेषेण च धारयेत् वामनपुराणे पद्माक्षं धारयेद्यस्तु जपहो
मव्रतादिषु सोऽश्वमेधफलं प्राप्य विष्णुलोके महीयते पद्माक्षमालिका नित्यं धारणीया प्रयत्नतः धारयेच्च विशेषेण जपहोमार्च
नादिषु तस्मात्सर्वप्रयत्नेन तुलस्याः पूजनं कुरु एकाग्रमनसा राजन् तुलसी हरिवल्लभा तुलसी देवपूजायां जाप्यकाले तथैव च
पूजने स्मरणे चैव अन्यकाले न धारयेत् भोजने शयने स्नाने मलमूत्रविसर्जने तुलसीकाष्ठमालाया धारणात्पतितो भवेत् भारण्ये
लघुबाधायां मैथुने घोरकर्मणि तुलसीकर्णकंठस्य ब्रह्महत्या पदे पदे तुलसी धार्यते कंठे मलमूत्रविसर्जने नरके पच्यते मूढो यम
दंडेन पीडितः शांडिल्यस्मृतौ तुलसी च यथा लक्ष्मि लक्ष्मीश्च तुलसी तथा न भेदस्त्वेतयो राजन् तुलसी हरिवल्लभा शालग्रा॰ २३

मशिलातुल्यातुलसीकाष्ठमालिका नभेदोस्तितयोःकिंचित्तस्मात्स्मात्वातुधारयेत् स्नानकालेयदाकंठेतुलसीदामभूषितः तद्धारिपति
तंपादौसपापिष्ठोनराधमः तुलसीकाष्ठमालांयोत्यशौचेवहतेतुयः अवैष्णवःसविज्ञेयोमहापातकवान्भवेत् यज्ञोपवीतवद्धार्या-
इतिस्मृत्यासउच्यते यज्ञसूत्राधिकाज्ञेयातुलसीहरिवल्लभा पुलस्त्यसंहितायाम् यज्ञसूत्रंत्रिवर्णानांवैदिकंकर्मसिद्धये तु
लसीसर्ववर्णानांस्त्रीणांमोक्षप्रदायिनी निवेद्यकेशवेमालांतुलसीकाष्ठसंभवाम् वहतेयोनरोभक्त्यातस्यवैनास्तिपातकम् त-
थाचश्रुतिः महोपनिषदि शंखचक्रधरोविद्वान्मालांतुलसिजांदधत्सजीवन्मुक्तइति प्रायश्चित्तनतस्यास्तिनपापंतस्यवि-
ग्रहे तुलसीकाष्ठसंभूतांमालांयोवहतेनरः श्रीपाद्मे कृष्णायुधांकितंविप्रंतुलसीकाष्ठभूषितम् दृष्ट्वानिंदापरोयस्तुस-
वैनरकभाग्भवेत् धारयंतिनयेमालांहैतुकाःपापबुद्धयः नरकान्ननिवर्ततेदग्धाःकोपाग्निनाहरेः विधिवद्ग्रथितासूत्रेमालांतुल
सिजाशुभा धारणीयासदाकंठेजपहोमार्चनादिषु नारदपंचरात्रे तुलसीमालिकाचैवराज्ञांचामरछत्रवत् ऊर्ध्वपुंड्रंसदा-
धार्यंशिखायज्ञोपवीतवत् अथभगवद्वाक्यंस्कांदे तुलसीकाष्ठजांमालांकंठस्थांवहतेतुयः अप्यशौचोप्यनाचारोमामे
वैतिनसंशयः तुलसीमालिकांकंठेबिभर्तिजनपावनीम् सपूज्योजायतेलोकेश्वपाकोपिहिनिश्चितम् तुलसीमालिकाधारि
पुनातिभुवनत्रयम् प्रणमंतिसुरास्तस्मैशिवशक्रयमादयः इतितुलसीमालोत्कर्षवर्णनम् अथयज्ञोपवीतउत्क
र्षोलिख्यते तदुक्तंहारीते एकैकमुपवीतंतुयतीनांब्रह्मचारिणाम् गृहीणांचवनस्थानामुपवीतद्वयंस्मृतम् सोत्त-

रीयंतृतीयंवाविभृयाच्छुभ्रतंतुना आश्रमाणांचतुर्णांच ब्रह्मसूत्रविधिर्मतैः तथैवभृगुस्मृतौ यज्ञसूत्रंबटोरेकं द्वितयेतर स
योःस्मृते एकमेवयतीनांस्यादितिधर्मोव्यवस्थितः पंचदेवुग्रामास्तु धर्मकामस्तथैवच आयुःकामीसदाकुर्याद्बहुयज्ञोपवी
तकम् सूतकेमृतकेक्षौरेचांडालस्पर्शनेतथा यज्ञसूत्रेनवीनंतुधारणमनुरब्रवीत् श्वानरासभसंस्पर्शम्लेच्छादीनांतथैवच मे
हनेवाथवाज्ञानात्नाभिरूर्ध्वमस्पृशं यदि तत्क्षणादेवसंत्याज्यंपर्णार्द्धंत्रसंभवा: तस्मात्सर्वप्रयत्नेन धार्यस्त्यात्योपवीतकं योनधा
रयतेविप्रोब्रह्मसूत्रंविधानतः तपोज्ञानंभवेत्तस्यसर्वकर्मचनिष्फलं पतितंत्रुटितंवापिब्रह्मसूत्रंयदाभवेत् नूतनंधारयेद्विप्रःस्ना
नसंकल्पपूर्वकं परित्यजन्नियावृभामोहात्तत्कायवर्जितः स्वर्गापवर्गमार्गाश्चच्युतास्तेनसंशयः ब्रह्मसूत्रपरित्यागाद्ब्रह्मचारीगृही
वनी परिव्राड्वापिप तन्नितस्मात्तन्नपरित्यजेत् तथैवपाराशरः दशाष्टौचगृहस्थस्यचत्वारिवनवासिनाम् एकएवोपवीतंस्या
द्यतीनांब्रह्मचारिणाम् यज्ञसूत्रद्वयंधार्यंब्राह्मणेनविधानतः तृतीयंतूत्तरीयार्थंवस्त्राभावेचतुर्थकम् रंध्रादिनाभिपर्यंतंयज्ञसूत्रं
पवित्रकं न्यूनेरोगप्रवृत्तिःस्यादधिकेधर्मनाशनम् सूतकेमृतकेक्षौरेचांडालस्पर्शनेनच यज्ञसूत्रनवीनस्यधारणंमनुरब्रवीत्
स्मृतिरत्नाकरे नाभेरूर्ध्वमनायुष्यंमधस्ताद्धर्मनाशनम् तस्मान्नाभिसमंधार्यमितिवेदविदोविदुः त्रयमूर्ध्वगतंतंतू तंतु
त्रयमधःस्थितम् त्रिवृच्चग्रंथिनैकेनउपवीतमिहोच्यते अथाचमनविधिस्तदुक्तंहारीते आचम्यान:परेमौनी प्राङ्मु २१
खोवाप्युदङ्मुखः नामभिःकेशवाद्यैश्चयथासंख्यमुपस्पृशेत् द्विराचम्येतसर्वत्रविण्मूत्रोत्सर्जनेत्रयम् पवित्रपाणिराचम्य

पश्चात्संध्यांसमाचरेत् संध्याभाष्ये गोकर्णाकृतिहस्तेनमाषमग्नंजलंपिबेत् तन्न्यूनमधिकंपीत्वासुरापानसमंभवेत् अं
गुष्ठाग्रंसमाकुंच्यमध्यमामध्यपर्वणि गोकर्णंतद्विविज्ञेयंसर्वेष्वाचमनेषुच तर्जन्यंगुष्ठसंयोगेराक्षसीमुद्रिकाभवेत् राक्षसी
मुद्रिकादत्तंततोयंरुधिरंभवेत् पूर्वाचमनममृतंसोमपानमथोत्तरम् दक्षिणेरक्तपानंतुसुरापानंतुपश्चिमे कनिष्ठानामिकां-
गुष्ठैर्नासाग्रकरपीडनम् ॐकारमुद्रासाप्रोक्तायतेश्चब्रह्मचारिणः पंचांगुलिभिर्नासाग्रपीडनंप्रणवाभिधम् सुहृद्यसर्वपाप
घ्नोवानप्रस्थगृहस्थयोः बृहद्ब्रह्मसंहितायाम् रेतोमूत्रशकृन्मोक्षेस्वधौवायुविमोक्षणे परिश्रमेमृतेहास्येउच्छिष्टजनसंग
मे उच्छिष्टस्पर्शनेमद्यदर्शनेचाश्रुपातने रक्तकेशमलस्पर्शेजृंभायांस्वप्नदर्शने छिक्काष्ठीवनसंक्रोधेष्वाचम्यशुचिकाम्य-
या उपक्रमोपसंहारेकर्मणोनीविबंधने केशवादिभिराचम्यसद्यःशुद्धिमवाप्नुयात् अकृत्वाचमनंविप्रोनकर्मफलभाग्भवे
त् यथाभिषेकजाशुद्धिर्बहिरेवप्रजायते मंत्रपूतजलैस्तद्वदाचम्यस्त्वंतराशुचि इत्यादिशौचाचारयुक्तैर्वैष्णवैर्नान्यत् न
दुक्तंवसिष्ठस्मृतौ आचारहीनंनपुनंतिवेदायद्यप्यधीताःसहषड्भिरंगैः छंदांस्येनंमृत्युकालेत्यजंतिनीडंशकुंताइवजात
पक्षाः चतुर्णामपिवर्णानामाचारोधर्मपालनम् आचारभ्रष्टदेहानांभवेद्धर्मःपराङ्मुखः भ्रष्टोयःस्वाश्रमाचारात्पतितःसो
भिधीयते समुल्लंघ्यसदाचारंकश्चिन्नाप्नोतिशोभनम् नारदीये धिक्जन्माचाररहितंजन्मधिक्ज्ञानवर्जितम् शू
द्रेपिदृश्यतेवृत्तंब्राह्मणेनतुदृश्यते शूद्रोपिब्राह्मणोज्ञेयोब्राह्मणःशूद्रएवसः बृहस्पतिस्मृतौ शौर्यवीर्यादिरहितः

स्तपोज्ञानविवर्जितः आचारहीनपुत्रस्तु मूर्खोच्चारसमः स्मृतः भगवद्वचनम् श्रुतिस्मृतिममैवाज्ञेयस्तामुल्लंघ्यवर्तते सं
आज्ञाच्छेदीममद्रोहीनमद्भक्तोनवैष्णवः श्रुतिस्मृतिउभेनेत्रेब्राह्मणानांप्रकीर्तिते एकेनविकलः काणोद्वाभ्यामंधस्तथैवच
भगवद्गीतायाम् यःशास्त्रविधिमुत्सृज्यवर्तते कामकारतः नससिद्धिमवाप्नोतिनसुखंनपरांगतिम् तस्माच्छास्त्रंप्र
माणंतेकार्याकार्यव्यवस्थितौ ज्ञात्वाशास्त्रविधानोक्तंकर्मकर्तुमिहार्हसि तस्माच्छास्त्रोक्तविधिनासंध्योपास्तिंसमाचरेत्
ततोसंमार्जयित्वाचपश्चादाचमनंचरेत् गायत्र्यार्घ्यंप्रदद्याच्चजपंकुर्वीतभक्तिमान् आचम्यतर्पयेद्देवानृपितृनपिविधान-
तः वैकुंठपार्षदान्पश्चात्तर्पयेच्चयथाविधि कुशासनेसमाविश्यपुंड्रंकुर्याद्यथाविधि ध्यात्वानारायणंदेवंरविमंडलम-
ध्यगम् उपस्थानंततःकृत्वानमस्कुर्यात्ततोहरिम् अथाश्रमधर्माः तदुक्तंहारीतस्मृतौ मौंजीमेखलयादंडंपा-
लाशंब्रह्मचारिणः त्रयस्तुवैणवादंडायतेःकाषायवाससी कुशचीरंवल्कलंवावनस्थस्यविधीयते कटिसूत्रंचकौपीनं
महतीशुक्लवाससी कुंडलेचांगुलीयानिगृहस्थस्यविधीयते यस्त्वेकदंडमालंब्यधर्मंब्राह्म्यंपरित्यजेत् विकर्मस्थोभवेद्वि
प्रःसयातिनरकंध्रुवम् शिखायज्ञोपवीतादिब्रह्मकर्मयतिस्त्यजेत् सजीवन्नेवचांडालोमृतोवैश्वाभिजायते कर्मणांफल
संत्यागःसन्यासःसमुदाहृतः चतुर्णामाश्रमाणांचगृहस्थस्यविशेषतः अहिंसासत्यवचनंसर्वभूतानुकंपिता शमोदा २८
नंयथाशक्तिगार्हस्थोधर्मउच्यते स्वधर्मकर्मार्जितजीवितानांस्वेस्वेचदारेषुसदारतानाम् जितेंद्रियाणामतिथिप्रियाण

मतिथिप्रियाणांगृहेपिमोक्षोपुरुषोत्तमानाम् श्रीमद्भागवते गृहेष्वाविशतांवापिपुंसांकुशलकर्मणाम् मद्वार्तायातयामानांनबंधायगृहामताः अथस्त्रीधर्मोलिख्यते अंतःकच्छंबहिःकच्छंद्विविधंपरिकीर्तितम् ब्राह्मणीप्रभृतीनांवैअवश्यमनुरब्रवीत् गृहस्थानांवनस्थानांस्त्रीणांचैवविशेषतः कच्छहीनेनयत्कर्मकुर्यात्तन्निष्फलंभवेत् ब्राह्मणस्यतुयानारीकच्छहीनाभवेद्यदि गर्हितासर्वकर्मभ्यःपतत्येवनसंशयः ऋतुकालेतुयानारीकच्छेनसहितायदि रौरवेनरकेघोरेपतितासानसंशयः शूद्रादिकानांस्त्रीणांचकन्यादीनांचसर्वदा असंस्कृतानांनारीणामकच्छंमनुरब्रवीत् अनंतसंहितायाम् स्त्रीणांतुभर्तृहीनानांवैष्णवीनांवसुंधरे यावच्छरीरपातंवैप्रशस्तंकेशधारणम् नकार्यंकेशवपनंवैष्णव्याभर्तृहीनया यद्यज्ञानात्करोत्येषातन्मुखंनावलोकयेत् विजयसंहितायांभगवद्वचनम् मपन्नापतिनाहीना यानारीकेशधारिणी तस्यास्तदुद्धारणेब्रह्मन्नदोषोस्तीतिमेमतम् खगेश्वरसंहितायाम् सकच्छंवर्णिनंभिक्षुअकच्छंगृहमेधिनम् सकेशांविधवांदृष्ट्वासचेलंस्नानमाचरेत् प्रयोजनांतराशक्त्याविधवायापमेच्छिरः मुमुक्षुर्यदिसातस्यावपनंतुनिषिध्यते अथब्राह्मणवैष्णवानांतुसर्वांगक्षौरंप्रशस्तम् तदुक्तंआपस्तंबेनधेश्वदेयखंडेतिनिरीशाखायाम् केशश्मश्रून्वपते नखानिनिकृंततेदतोधावतेस्नातिअहतंवासःपरिधत्तेपाप्मनोपहत्यै इत्यादिश्रुतिः स्मृतिरपि ब्राह्मणोवैष्णवोवापिपश्मश्रूधारीभवेद्यदि सजीवन्नेवचांडालोमृतश्वश्वाभिजायते अ-

ग्रा.भा.
२६

थनमस्कारनियमं आपस्तंबे समित्पुष्पकुशाग्न्यंबुमृदन्नाक्षतपाणिकः जपंहोमंचकुर्वाणोनाभिवाद्योद्विजोबुधैः वमंतंजृं स.
भमाणंचकुर्वंतंदंतधावनम् अभ्यक्तशिरसंचैवस्नातंनैवाभिवादयेत् माकूपाणिकमनाज्ञातमशक्तंरिपुमातुरं॥ योगिनंचव्रत
थाशक्तंकानिष्ठान्नाभिवादयेत् पाषंडंपतितंव्रात्यंमहापातकिनंशठम् नास्तिकंचकृतघ्नंचनाभिवादेद्विजोत्तमः धावंतंचप्र
मत्तंचमूत्रोच्चारकरंतथा भुंजानमातुरंसाहंनाभिवादेद्विजोत्तमः अश्रोत्रियंकृतघ्नंचाब्रह्मण्यंस्वर्णहारिणम् पौनर्भवंदेव
लकंगर्भसंस्कारवर्जितम् अन्यांश्चपतितान्विप्रान्नाभिवादेद्विजोत्तमः धावंतंजलमध्यस्थंदूरस्थंधनगर्वितम् देहाभिमानि
नंचैवनाभिवादेत्कदाचन इत्यादिश्रुतिस्मृत्युक्तसद्धर्मप्रतिपादनायस्वीकृतलीलामानुषविग्रहोशठकोपरामानुजो तदुक्तं
विष्वक्सेनसंहितायाम् नारायणंप्रतिविष्वक्सेनवचनं भूम्यांकृतावतारोहंसर्वानेतान्जनान्दृढम् प्रापयिष्यामिवैकुंठं
नात्रकार्याविचारणा एवंकृतप्रतिज्ञोथकुरुकानगरेभुवि शठकोपइतिख्यातोजनिष्येकारिरूतोमहान् ब्रह्मांडपुराणे
दत्तात्रेयः कृतयुगेत्रेतायांरघुनंदनः लोकसंरक्षणार्थायनैषोमानुषमात्रकः तथैवरामानुजोपि तदुक्तंभागवते
कलौखलुभविष्यंतिनारायणपरायणाः क्वचित्क्वचिन्महाराजद्राविडेषुचभूरिशः ताम्रपर्णीनदीयत्रकृतमालापयस्विनी-
कावेरीचमहापुण्याप्रतीचीचमहानदी येपिबंतिजलंतासांमनुजामनुजेश्वर प्रायोभक्ताभविष्यंतिवासुदेवेमलाशयाः २६
पद्मपुराणेपूर्वखंडे पाषंडबहुलेलोकेकुदृष्टिजनसंकुले कलौवैष्णवसिद्धांतं पुनरुद्धार्यतेयतिः अनंतप्रथमंनामद्वि-

तीयंलक्ष्मणंतथा तृतीयंबलरामंच कलौरामानुजोयतिः प्रपन्नामृतेपि पाषंडबौधचार्वाकैः त्रयीधर्मोविलोपितः
दत्तात्रेयस्वरूपेण लोकेपाषंडसंकुले त्रिदंडधारिणापूर्वंविष्णुनारक्षितात्रयी विष्णोस्तुपार्षदास्त्वद्यशेषशेषाशनादयः
अवतीर्णास्तुतेक्षित्यांदत्तात्रेयादयोयथा स्वेच्छाविहारिणस्तेचनकर्मवशवर्तिनः भगवद्गीतायाम् यदायदाहिध-
र्मस्यग्लानिर्भवतिभारत अभ्युत्थानमधर्मस्यतदात्मानंसृजाम्यहम् परित्राणायसाधूनांविनाशायचदुष्कृताम् धर्म-
संस्थापनार्थायसंभवामियुगेयुगे भार्गवपुराणेब्रह्मराक्षसवचनम् महासूर्यान्वयेपुण्येकेशवस्यत्रिपाठिनः
जज्ञेपुण्यवतःपुत्रोनंताशीनंततेजसा तस्यरामानुजइतिपितानामाकरोन्मुदा सर्वचेतनरक्षार्थमवतीर्णोदयानिधिः॥
एनंशेषांशसंभूतंरामानुजमुनिंविना नान्यःपुमान्समर्थःस्यान्मज्जन्मेदंनिवारितुं तस्माद्यतींद्रसामर्थ्यमीश्वरस्यापिना
स्तिहि यतोयतींद्रसंबंधासापात्माद्यपिमुक्तिभाक् तस्माद्यंलक्ष्मणदेशिकेंद्रःसाक्षाद्धरिर्लोकगुरुर्महात्मा तस्यैव
संबंधबलेनतेनमोक्षोहिसिद्धोनिखिलात्मनांच ततोनिर्विघ्नसंसारात्श्रेयसेदेशिकाश्रिताः तत्रापिद्विविधाप्रोक्ताप्रप-
न्नाभक्तिभेदतः तत्रादौभक्तिलक्षणम् तदुक्तंपाद्मे आद्यंतुवैष्णवंप्रोक्तंशंखचक्रांकनंहरेः धारणंचोर्ध्वपुंड्रा-
णांतन्मंत्राणांपरिग्रहः कीर्तनंश्रवणंचैववंदनंपादसेवनम् तत्पादोदकसेवाचतन्निवेदितभोजनम् तदीयानांच
सेवाचद्वादशीव्रतनिष्ठितम् तुलसीरोपणंविष्णोर्देवदेवस्यशार्ङ्गिणः भक्तिःषोडशधाप्रोक्ताभवबंधविमुक्तये तथा

रा·सा· ७

चभागवते स्मरणंकीर्तनंविष्णोःस्मरणंपादसेवनम् अर्चनंवंदनंदास्यंसख्यमात्मनिवेदनम् इतिपुंसार्पिताविष्णोर्भ- सं·
क्तिश्चेन्नवलक्षणा क्रियतेभगवत्यद्धातन्मन्येधीतमुत्तमम् हारीतेपि शंखचक्रोर्ध्वपुंड्रादिधारणंस्मरणंहरेः त-
न्नामकीर्तनंचैवतन्निवेदितभोजनम् तत्पादवंदनंचैवतत्पादांबुनिषेवणं एकादश्युपवासश्चतुलस्याअर्चनंहरेः तदी
यानामर्चनंचभक्तिर्नवविधास्मृता इतिसाधनरूपाकथिता अथसिद्धा आसीनोवाशयानोवातिष्ठन्वायत्रकु-
त्रचित् अविच्छिन्नास्मृतिर्यावैसासिद्धापरिकीर्तिता स्मर्तव्यःसततंविष्णुर्विस्मर्तव्योनजातुचित् सर्वेविधिनिषेधास्युः
रेतयोरेवकिंकराः अथार्तप्रपन्नलक्षणम् श्रीशानुभवप्रत्यूहंदेहस्थितिंदुरुवहां त्वरयाप्राप्तिमीशानेनिरव
द्यतयापुनः हेयमिदंशरीरंतुतवकैंकर्यरोधिनम् शीघ्रमेवजहिस्वामिन्प्रार्थनार्तेतिकथ्यते अथदृप्तलक्षणंतदु-
कंपाद्ये कृत्याकृत्यविवेकंचपरलोकस्यचिंतनम् तत्प्राप्तिसाधनंविष्णोःस्वरूपज्ञानमेवच उपायभावेसंत्यज्यक
र्मज्ञानादिकंनरः कुर्वन्भगवतःप्रीत्यैमहाभागवतोत्तमः तथाचश्रीभागवते ननाकपृष्ठंनचसार्वभौमंन
पारमेष्ठ्यंनरसाधिपत्यम् नयोगसिद्धीरपुनर्भवंवावांछंतियत्पादरजःप्रपन्नाः एकांतिनोयस्यनकिंचनार्थंवांछंतियेवै
भगवत्प्रपन्नाः अत्यद्भुतंतच्चरितंसुमंगलंगायंतआनंदसमुद्रमग्नाः त्वमेवोपायभूतोमेत्वन्यत्किंचिन्नविद्यते इत्थंस्व २८
भारमारोप्यसिद्धोपायेश्रियःपतौ निहत्यनिर्भरतयास्वप्रयत्नेषुसर्वतः यावद्देहमवस्थानंदृप्तप्रपत्तिरीर्यते भग

वद्वचनम् भक्त्यापरमयाचैव प्रपत्त्याचमहामते प्राप्योऽहंनान्यथाप्राप्योमामकैः कार्यलिप्सुभिः त्रिदंडमवलंबंतेयतयोयेमहाधि
प् तेषामपिचकर्तव्यमरकृत्यमितरेषुकिम् एतादृशपूर्वोक्तविशेषणविशिष्टानांभागवतानांआराधनमाहात्म्यंलिख्यते तद्
क्तंपाराशरस्मृतौ तदीयाराधनंपुण्यंवक्ष्यामिमुनिसत्तमाः यदन्वेषणमात्रेणसर्वपापैःप्रमुच्यते नातःपरतरंपुण्यंत्रिषु
लोकेषुविद्यते सर्वकामप्रदंपुंसांअत्यंतातिशायंहरेः तस्मात्परतरंश्रेयोनास्तिसत्यंब्रवीम्यहं सकृत्संपूजनंतेषामुक्तिदंपा·
पिनामपि सहस्रवार्षिकीपूजाविष्णोर्भगवतोहरेः सकृद्भागवताचार्याः कलांनार्हतिषोडशीम् सकृत्संपूजितेपुण्येमहाभा
गवतेगृहे आकल्पकोटिपितरःपरितृप्तानसंशयः यथातुष्यतिदेवेशोमहाभागवतार्चनात् तथानतुष्यतिहरिर्विधिवत्स्वा
र्चनादपि षष्टिवर्षसहस्राणिविष्णोराराधनेफलम् सकृद्वैष्णवपूजायांलभतेनात्रसंशयः किंतस्यदानैःकिंतीर्थैःकिंयज्ञै
र्विधिवत्कृतैः सर्वंसंप्राप्यतेपुंसांविष्णुभक्ताभिपूजनात् आराध्यैवजगन्नाथंयथेष्टानपरानपि त्यक्तभक्तार्चनाव्यर्था
आसाराउरवरांब्रुवन् वैष्णवोयद्गृहेभुंक्तेतस्यभुंक्तेहरिःस्वयम् हरिर्यस्यगृहेभुंक्तेतस्यभुंक्तेजगत्त्रयं तोषयंतिचतद्भक्ताः
प्पंचकालपरायणान् सकामास्तत्फलंयातिनिष्कामाःपरमंपदम् यथाभागवतानांतुपादांभोरुहसेवनात् तथास्वारा·
धनेचापिनप्रीतोभगवान्हरिः स्कांदेभगवद्वचनम् यदन्नंकुरुतेनित्यंवक्ष्यासागृह्यतेमया रसंदास्यातिजिह्वायाम
भामिकमलोद्भव भारद्वाजसंहितायाम् सद्भिर्गृहागताःसंतःपूजनीयाविशेषतः प्रियवाग्भिस्तथार्घ्यादैर्भोगैरि·

ष्टैर्यथोचितैः अन्नाद्यमपिवानीयंप्रभूतंस्वल्पमेववा भगवत्सीनयेनित्यंदद्यात्कुटुंबाययोगिने एकंभागवतंविप्रमर्चयेदन्नदानतः त-
स्यस्यात्सफलंजन्मतच्छृणुष्वमहामते भगवद्वचनम् ममभक्तभक्तेषुप्रीतिरभ्यधिकाभवेत् तस्मान्मद्भक्तभक्तश्च पू-
जनीयोविशेषतः अध्वश्रांतमविज्ञातमतिथिंक्षुत्पिपासितम् योनपूजयतेभक्त्यातमाहुर्ब्रह्मघातकम् मद्वंदनाच्छतगुणंम-
द्भक्तस्यतुवंदनम् मद्भोजनाच्छतगुणंमद्भक्तस्यतुभोजनम् बृहन्नारदीये योविष्णुभक्तान्निःकामान्भोजयेच्छ्रद्धया
न्वितः त्रिसप्तकुलसंयुक्तःसयातिहरिमंदिरम् विष्णोःप्रसादमाकांक्षन्वैष्णवान्परितोषयेत् अन्यथावासकामोसौनैवकेनापि-
तुष्यति तस्मात्सर्वप्रयत्नेनवैष्णवानर्चयेत्सदा सर्वंतरतिदुःखौघंमहाभागवतार्चनात् पूजनाद्विष्णुभक्तानांपुरुषार्थोस्तिनेत-
रः तेषुचद्वेषतःकिंचित्नास्तिनाशनमात्मनः अतिथिर्यस्यभग्नाशोगृहात्प्रतिनिवर्तते सतस्यदुष्कृतंदत्वापुण्यमादायगच्छति
वस्त्रालंकारभूषाद्यैर्योभागवतमर्चयेत् भूष्यतेतस्यवंशोपिश्रीवृद्धिःपुत्रपौत्रकैः अंगसंवाहनाद्यैश्चतांबूलैर्व्यंजनैस्तथा तो-
षयेद्भगवद्भक्तंतुष्यतेचजनार्दनः योप्रतिष्ठापयेद्विष्णुंवैष्णवंवागुणान्वितम् नतुल्यमितिमेबुद्धिर्भक्तपूजाशताधिका अ
थावैष्णवपूजनेनिषेधः तदुक्तंपाराशरे अवैष्णवस्तुयोविप्रःश्वपाकादधमःस्मृतः श्राद्धादिसर्वकृत्येषुवर्जयेत्तंप्रय
त्नतः अवैष्णवानांविप्राणांपूजनंवंदनंतथा यजनाध्यापनेश्राद्धेभोजनंपरिवर्जयेत् अवैष्णवस्तुयोविप्रःसर्वधर्मयुतोपिवा
सपाषंडीतुविज्ञेयःसर्वकर्मसुगर्हितः विष्णुपुराणे अवैष्णवस्यपांडित्यंसर्वशास्त्रसमन्वितम् वचस्तस्यनगृण्ही

२८

यानुभुक्तनालीदंहविर्यथा अवैष्णवगृहेभुक्त्वापीत्वाअज्ञानतोजलम् चांद्रायणशतंकुर्यात् न्नचशुद्धोभवेन्नरः सर्वेब्रह्मव-
दिष्यंतिसंप्राप्तेतुकलौयुगे नानुतिष्ठंतिमैत्रेयशिश्नोदरपरायणाः यदायदासतांहानिर्वेदमार्गानुवर्तिनाम् तदातदाकलेर्वृ-
द्धिरनुमेयोविचक्षणैः वसिष्ठस्मृतौ अवैष्णवस्तुयोविप्रःसर्वधर्मबहिष्कृतः रौरवंनरकंप्राप्यचांडालियोनिमाप्नुयात्
अवैष्णवत्वंविप्राणामात्मनाशनकारणम् तस्मात्तुवैष्णवत्वंहिविप्राणांश्रुतिनोदितम् चतुर्वेदीचयोविप्रोवासुदेवंनविंदति
वेदभारसमाक्रांतोसवैब्राह्मणगर्दभः नित्यंनैमित्तिकंकाम्यंत्रिविधंश्रुतिनोदितम् अवैष्णवानांविप्राणांकर्मतन्निष्फलंभवेत्
सत्कर्मनिरताःशुद्धाःसांख्ययोगविदस्तथा नार्हंतिशरणस्थस्यकलांकोटितमामपि तेषांनपरिशुद्धानियोनिविद्याचकर्मच
येविष्णुचरणोकांत्यविहीनाब्राह्मणादयः वसिष्ठस्मृतौ अवैष्णवःस्याद्योविप्रोबहुशास्त्रश्रुतोपिवा सजीवन्नेव
चांडालोमृतश्चश्वाभिजायते क्रतुसाहस्रिकंवापिलोकेविप्रमवैष्णवम् चांडालमिवचक्षीतवर्जयेत्सर्वकर्मसु शंखचक्रो-
र्ध्वपुंड्रादिरहितंब्राह्मणाधमम् पूजयिष्यतियःश्राद्धेसर्वंकर्मास्यनिष्फलम् भगवंतमनुद्दिश्यनदद्यान्नयजेत्क्वचित् नावै-
ष्णवान्नंभुंजीतदद्यान्नावैष्णवायच अवैष्णवस्तुयोविप्रःश्वपाकादधमःस्मृतः अश्राद्धेयोऽग्रपांडेःयोरौरवंनरकंव्रजेत्॥
भगवंतमनुद्दिश्ययःकर्मकुरुतेनरः सपाषांडीतिविज्ञेयःसर्वकर्मसुगर्हितः श्रुतिस्मृत्युदितंधर्मंअकृत्वायश्चरेन्नरः विकर्मस्थः
सविज्ञेयःसर्वकर्मसुगर्हितः योवेदार्थंगर्हयतिधर्माधर्मंनविंदति नबुध्यतेपरंलोकंसनास्तिकउदाहृतः १ उ-

कधर्मपरित्यज्ययोऽन्यधर्मेप्रवर्तते पतितः सतुविज्ञेयः सर्वधर्मबहिष्कृतः यः कर्मकुरुतेविप्रोविनाविष्णवर्चनंक्वचित् ब्राह्मण्याद्भ्र
श्यतेसद्यश्चांडालत्वंसगच्छति अर्चयित्वातुगोविंदंइतरानर्चयेत्पृथक् अवैष्णवत्वंतस्यापीतरप्रभक्त्याभवेद्ध्रुवम् योनरोवैष्णवं
चिन्हंधृत्वाचतमसाचरन् त्यजेच्चेद्वैदिकंधर्मंसोपिपाषंडतांव्रजेत् नैसर्गिकंतुजीवानांदास्यंविष्णोःसनातनम् तद्विनावर्तते
मोहादात्मचोरःसकथ्यते शंखचक्रविहीनास्तुदेवतांतरपूजकाः द्वादशीविमुखाविप्राःशैवाश्चावैष्णवाःस्मृताः॥ अवैष्ण
वानांसंसर्गात्पूजनाद्वंदनादपि॥ यजनाध्ययनात्सद्योवैष्णवत्वाच्च्युतोभवेत् सर्वत्रावैष्णवान्विप्रान्पतितांश्चविवर्जयेत् वै
ष्णवानेवविप्रांस्तुसर्वकर्मस्वयोजयेत् पुनरपिवैष्णवोत्कर्षंलिख्यते तदुक्तंपद्मपुराणे तस्मात्सर्वप्रयत्नेनवैष्णवान्पू
जयेत्सदा सर्वंनश्यतिदुःखौघंमहाभागवतार्चनात् महाभागवतान्श्रेष्ठान्पूजयेद्गृहमागतान् मधुपर्कविधानेनयथाशक्त्या
द्विजोत्तम आक्षेपांतरेरम्येपादौप्रक्षाल्यभक्तितः अर्चयेद्गंधपुष्पाद्यैर्वस्त्रैराभरणादिभिः तांबूलेनफलैर्वापियथाशक्त्या
समर्चयेत् पुनःप्रणम्यभक्त्याचशनैस्तत्रनिवर्तते उपचारंभृत्यकुर्याद्यथाविधिसमन्वितः वैष्णवान्भोजयेद्विप्रान्भक्त्या
दद्याच्चदक्षिणां एवमभ्यर्चयेन्नित्यंयावज्जीवमतंद्रितः कुलकोटिंसमुद्धृत्यवैष्णवलोकमाप्नुयात् आराधनानांसर्वेषां
विष्णोराराधनंपरम् तस्मात्परतरंदेवितदीयानांचपूजनम् अर्चयित्वातुगोविंदंतदीयानार्चयेत्तुयः नसभागवतोज्ञेयः
केवलंदांभिकःस्मृतः भागवते अर्चायामेवहरयेपूजांयःश्रद्धयेहते नतद्भक्तेषुचान्येषुसभक्तःप्राकृतःस्मृतः पा

वहृचनम् भक्त्यापरमयाचैव प्रपत्त्याचामहामते प्राप्योहंनान्यथाप्राप्योमामकैः कार्यलिप्सुभिः त्रिदंडमवलंबंतेयतयोयेमहाधि
प तेषामपिचकर्तव्यमत्कृत्यमितरेषुकिम् एतादृशपूर्वोक्तविशेषणविशिष्टानांभागवतानांआराधनमाहात्म्यंलिख्यते तदु
क्तंपाराशरस्मृतौ तदीयाराधनंपुण्यंवक्ष्यामिमुनिसत्तमाः यदन्वेषणमात्रेणसर्वपापैःप्रमुच्यते नातःपरतरंपुण्यंत्रिषु
लोकेषुविद्यते सर्वकामप्रदंपुंसांअत्यंतातिशयंहरेः तस्मात्परतरंश्रेयोनास्तिसत्यंब्रवीम्यहं सकृत्संपूजनंतेषांमुक्तिदंपा·
पिनामपि सहस्रवार्षिकीपूजा विष्णोर्भगवतोहरेः सकृद्भागवताचार्याः कलांनार्हतिषोडशीम् सकृत्संपूजितेपुंस्येमहाभा
गवतेगृहे आकल्पकोटिपितरःपरितृप्तानसंशयः यथातुष्यतिदेवेशोमहाभागवतार्चनात् तथानतुष्यतिहरिर्विधिवत्स्वा
र्चनादपि षष्टिवर्षसहस्राणिविष्णोराराधनेफलम् सकृद्वैष्णवपूजायांलभतेनात्रसंशयः किंतस्यदानैःकिंतीर्थैःकिंयज्ञै
र्विधिवत्कृतैः सर्वंसंप्राप्यतेपुंसांविष्णुभक्ताभिपूजनात् आराध्यैवजगन्नाथंयथेष्टानपरानपि त्वद्भक्तार्चनाद्व्यर्था
आसाराउरवरांबुवत् वैष्णवोयद्गृहेभुंक्तेतस्यभुंक्तेहरिःस्वयम् हरिर्यस्यगृहेभुंक्तेतस्यभुंक्तेजगत्त्रयं तोषयंतिचतद्भक्ताः
म्यंचकालपरायणान् सकामास्तत्फलंयातिनिष्कामाःपरमंपदम् यथाभागवतानांतुपादांभोरुहसेवनात् तथास्वारा·
धनेचापिनप्रीतोभगवान्हरिः स्कांदेभगवद्वचनम् यदन्नंकुरुतेनिस्वंचक्षुषागृह्यतेमया रसंदास्यतिजिह्वायाम
भामिकमलोद्भव भारद्वाजसंहितायाम् सद्भिर्गृहागताःसंतःपूजनीयाविशेषतः प्रियवाग्भिस्तथार्घ्याद्यैःभोगैरि-

द्वैर्यथोचितैः अन्नाद्यमपिवातोयंप्रभूतंस्वल्पमेववा भगवल्लीनयेनित्यंदद्याच्छूद्राययोगिने एकंभागवतंविप्रमर्चयेदन्नदानतः न-
स्यस्यात्फलंजन्मतच्छृणुष्वमहामते भगवद्वचनम् ममभद्भक्तभक्तेषुप्रीतिरभ्यधिकाभवेत् तस्मान्मद्भक्तभक्तश्च पू-
जनीयोविशेषतः अश्रेश्रांतमविज्ञातमतिथिंक्षुत्पिपासितम् योनपूजयतेभक्त्यातमाहुर्ब्रह्मघातकम् मद्वंदनाच्छतगुणंम-
द्भक्तस्यतुवंदनम् मद्भोजनाच्छतगुणंमद्भक्तस्यतुभोजनम् बृहन्नारदीये योविष्णुभक्तान्निष्कामान्भोजयेच्छ्रद्धया-
न्वितः त्रिसप्तकुलसंयुक्तःसयातिहरिमंदिरम् विष्णोःप्रसादमाकांक्षन्वैष्णवान्परितोषयेत् अन्यथावासकामोसौनैवकेनापि
तुष्यति तस्मात्सर्वप्रयत्नेनवैष्णवानर्चयेत्सदा सर्वंतरतिदुःखौघंमहाभागवतार्चनात् पूजनाद्विष्णुभक्तानांपुरुषार्थोस्तिनेत-
रः तेषुचद्वेषतःकिंचिन्नास्तिनाशनमात्मनः अतिथिर्यस्यभग्नाशोगृहात्प्रतिनिवर्तते सतस्मैदुष्कृतंदत्वापुण्यमादायगच्छति
वस्त्रालंकारभूषाद्यैर्योभागवतमर्चयेत् भूष्यतेतस्यवंशोपिश्रीवृद्धिःपुत्रपौत्रकैः अंगसंवाहनाद्यैश्चतांबूलैर्व्यजनैस्तथा तो-
षयेद्भगवद्भक्तंतुष्यतेचजनार्दनः योप्रतिष्ठापयेद्विष्णुंवैष्णवंवागुणान्वितम् नतुल्यमितिमेबुद्धिर्भक्तपूजाशताधिका अ-
थावैष्णवपूजनेनिषेधः तदुक्तंपाराशरे अवैष्णवस्तुयोविप्रःश्वपाकादधमःस्मृतः श्राद्धादिसर्वकृत्येषुवर्जयेत्तंप्रय-
त्नतः अवैष्णवानांविप्राणांपूजनंवंदनंतथा यजनाध्यापनेश्राद्धेभोजनंपरिवर्जयेत् अवैष्णवस्तुयोविप्रःसर्वधर्मयुतोपिवा
सपाषंडीतुविज्ञेयःसर्वकर्मसुगर्हितः विष्णुपुराणे अवैष्णवस्यपांडित्यंसर्वशास्त्रसमन्वितम् वचस्तस्यनगृण्ही-

यातुश्शनालीदंहविर्यथा अवैष्णवगृहेभुक्त्वापीत्वाअज्ञानतोजलम् चांद्रायणशतंकुर्यात्नचशुद्धोभवेन्नरः सर्वेब्रह्मव-
दिष्यंतिसंप्राप्तेतुकलौयुगे नानुतिष्ठंतिमैत्रेयशिश्नोदरपरायणाः यदायदासतांहानिर्वेदमार्गानुवर्तिनाम् तदातदाकलेर्वृ-
द्धिरनुमेयोविचक्षणैः वसिष्ठस्मृतौ अवैष्णवस्तुयोविप्रःसर्वधर्मबहिष्कृतः रौरवंनरकंप्राप्यचांडालियोनिमाप्नुयात्
अवैष्णवत्वंविप्राणामात्मनाशनकारणम् तस्मात्तुवैष्णवत्वंहिविप्राणांश्रुतिनोदितम् चतुर्वेदीचयोविप्रोवासुदेवंनविंदति
वेदभारसमाक्रांतोसवैब्राह्मणगर्दभः नित्यंनैमित्तिकंकाम्यंत्रिविधंश्रुतिनोदितम् अवैष्णवानांविप्राणांकर्मतन्निष्फलंभवेत्
सत्कर्मनिरताःशुद्धाःसांख्ययोगविदस्तथा नार्हंतिशरणस्थस्यकलांकोटितमामपि तेषांनपारिशुद्धानियोनिविद्याचकर्मच
येविष्णुचरणेकांत्यविहीनाब्राह्मणादयः वसिष्ठस्मृतौ अवैष्णवःस्याद्योविप्रोबहुशास्त्रश्रुतोपिवा सजीवन्नेव
चांडालोमृतश्श्वाभिजायते क्रतुसाहस्रिकंचापिलोकेविप्रमवैष्णवम् चांडालमिववक्षीतवर्जयेत्सर्वकर्मसु शंखचक्रो-
र्ध्वपुंड्रादिरहितंब्राह्मणाधमम् पूजयिष्यतियःश्राद्धेसर्वंकर्मास्यनिष्फलम् भगवंतमनुद्दिश्यनदद्यान्नयजेत्क्वचित् नावै-
ष्णवान्नंभुंजीतदद्यान्नावैष्णवायच अवैष्णवस्तुयोविप्रःश्वपाकादधमःस्मृतः अश्राद्धेयोरघपांडेः पोरौरवंनरकंव्रजेत्॥
भगवंतमनुद्दिश्ययःकर्मकुरुतेनरः सपाषांडीतिविज्ञेयःसर्वकर्मसुगर्हितः श्रुतिस्मृत्युदितंधर्मअकृत्वायश्चरेन्नरः विकर्मस्थः
सविज्ञेयःसर्वकर्मसुगर्हितः योवेदार्थंगर्हयति धर्माधर्मंनविंदति नबुध्यतेपरंलोकंसनास्तिकउदाहृतः १ उ-

स्वधर्मंपरित्यज्ययोन्यधर्मेप्रवर्तते पतितःसतुविज्ञेयःसर्वधर्मबहिष्कृतः यःकर्मकुरुतेविप्रोविनाविष्ण्वर्चनंक्वचित् ब्राह्मण्याद्
भ्रंशतेसद्यश्चांडालत्वंसगच्छति अर्चयित्वातुगोविंदंइतरानर्चयेत्पृथक् अवैष्णवत्वंतस्यापीतरथान्यथाभवेद्ध्रुवम् योनरोवैष्णवो
चिह्नंधृत्वाचनतत्समाचरन् त्यजेच्चेद्वैदिकंधर्मंसोपिपाषंडतांव्रजेत् नैसर्गिकंतुजीवानांदास्यंविष्णोःसनातनम् तद्विनावर्तते
मोहादात्मचोरःसकथ्यते शंखचक्रविहीनास्तुदेवतांतरपूजकाः द्वादशीविमुखाविप्राःशैवाश्चावैष्णवाःस्मृताः॥ अवैष्ण
वानांसंसर्गात्पूजनाद्वंदनादपि॥ यजनाध्ययनात्सद्योवैष्णवत्वाच्च्युतोभवेत् सर्वत्रावैष्णवान्विप्रान्पतितांश्चविवर्जयेत् वै
ष्णवानेवविप्रांस्तुसर्वकर्मसुयोजयेत् पुनरपिवैष्णवोत्कर्षलिख्यते तदुक्तंपद्मपुराणे तस्मात्सर्वप्रयत्नेनवैष्णवान्पू
जयेत्सदा सर्वंनश्यतिदुःखौघंमहाभागवतार्चनात् महाभागवतान्श्रेष्ठान्पूजयेद्गृहमागतान् मधुपर्कविधानेनयथाशक्त्या
द्विजोत्तम शंखोपात्तांतरैरम्यैःपादौप्रक्षाल्यभक्तितः अर्चयेद्गंधपुष्पाद्यैर्वस्त्रैराभरणादिभिः तांबूलैनफलैर्वापियथाशक्त्या
समर्चयेत् पुनःप्रणम्यभक्त्याचशनैस्तत्रनिवर्तते उपचारंभृशंकुर्याद्यथाविधिसमन्वितः वैष्णवान्भोजयेद्विप्रान्भक्त्या
दद्याच्चदक्षिणां एवमभ्यर्चयेन्नित्यंयावज्जीवमतंद्रितः कुलकोटिंसमुद्धृत्यवैष्णवंलोकमाप्नुयात् आराधनानांसर्वेषां
विष्णोराराधनंपरम् तस्मात्परतरंदेवितदीयानांचपूजनम् अर्चयित्वातुगोविंदंतदीयान्नार्चयेत्तुयः नसभागवतोज्ञेयः 
केवलंदांभिकःस्मृतः भागवते अर्चायामेवहरयेपूजांयःश्रद्धयेहते नतद्भक्तेषुचान्येषुसभक्तःप्राकृतःस्मृतः पा

राशरस्मृतौ अर्थपंचकतत्वज्ञाः पंचसंस्कारसंस्कृताः आकारत्रयसंपन्नास्तेवैभागवताःस्मृताः तापःपुंड्रंतथानाममंत्रोया
गश्चपंचमः अमीतेपंचसंस्काराःपरमैकांतिहेतवः हृत्मूर्तौवासुदेवस्यचरंवाचरमेवच अचरंब्रह्मसंयुक्तंचरंभागवताःस्मृ
ताः श्रीभागवतेएकादशस्कंधे येवैभगवताप्रोक्ताउपायात्यात्मलब्धये अंजःपुंसामविदुषांविद्धिभागवतान्हिता
न् सर्वभूतेषुयःपश्येद्भगवद्भावमात्मनः भूतानिभगवत्यात्मन्येषभागवतोत्तमः देहेंद्रियप्राणमनोधियांयोजन्माप्य·
यक्षुद्भयतर्षकृच्छ्रैः संसारधर्मैरविमुह्यमानःस्मृत्याहरेर्भागवतप्रधानः नकाम्यकर्मबीजानांयस्यचेतसिसंभवः वासु
देवैकनिलयःसवैभागवतोत्तमः नयस्यजन्मकर्मभ्यांनवर्णाश्रमजातिभिः सज्जतेस्मिन्नहंभावोदेहेवैसहरेःप्रियः न
यस्यस्वपरइतिवित्तेष्वात्मनिवाभिदा सर्वभूतसमःशांतःसवैभागवतोत्तमः त्रिभुवनविभवहेतवेप्यकुंठस्मृतिरजितात्म
सुरादिभिर्विमृग्यात् नचलतिभगवत्पदारविंदाल्लवनिमिषार्धमपिसवैष्णवाग्र्यः विसृजतिहृदयंनयस्यसाक्षाद्धरिरवशा
भिहितोप्यघौघनाशः प्रणयरशनयाधृतांघ्रिपद्मःसभवतिभागवतप्रधानउक्तः देवर्षिभूताप्तनृणांपितॄणांनकिंकरोनायमृ
णीचराजन् सर्वात्मनायःशरणंशरण्यंगतोमुकुंदंपरिहृत्यकृत्यम् स्वपादमूलंभजतःप्रियस्यत्यक्तान्यभावस्यहरिःपरेशः वि·
कर्मयच्चोत्पतितंकथंचिद्धुनोतिसर्वंहृदिसन्निविष्टः बाध्यमानोपिमद्भक्तोविषयैरजितेंद्रियः प्रायःप्रगल्भयाभक्त्याविषयैर्नाभि
भूयते भगवद्गीतायाम् अपिचेत्सुदुराचारोभजतेमामनन्यभाक् साधुरेवसमंतव्यःसम्यग्व्यवसितोहिसः स्कंद

ना· सा· पुराणे विष्णुभक्तिसमायुक्तोमिथ्याचारोप्यनाश्रमी पुनातिसकलाँल्लोकान्सहस्रांशुरिवोदितः ब्राह्मणःक्षत्रियोवैश्यःशूद्रोवाय सं·
३० दितरः विष्णुभक्तिसमायुक्तोज्ञेयःसर्वोत्तमोत्तमः दुराचारोपिसर्वाशीकृतघ्नोनास्तिकःपुरा समाश्रयेदादिदेवंश्रद्धयाशरणंहियः
निर्दोषंविद्धितंजन्तुंप्रभावात्परमात्मनः तथाचहारीतः भगवद्भक्तिदीप्ताग्निदग्धदुर्जातिकश्मलः श्वपचोपिबुधैःश्लाघ्यो
नवेदाढ्योपिनास्तिकः वामने श्वपाकमिवनेक्षेतलोकेविप्रमवैष्णवम् वैष्णवोवर्णबाह्योपिपुनातिभुवनत्रयम् शूद्रं
वाभगवद्भक्तंनिषादंश्वपचंतथा वीक्षतेजातिसामान्यंसयातिनरकंध्रुवम् निंदांकुर्वंतियेमूढावैष्णवानांमहात्मनाम् पतंतिपि-
तृभिःसार्धंमहारौरवसंज्ञकम् स्कांदे- अर्चावतारोपादानवैष्णवोत्पत्तिचिंतनम् मातृयोनिपरीक्षायास्तुल्यमाहुर्मनी
षिणः भागवतेप्रह्लादवचनम् विप्राद्द्विषड्गुणयुतादरविंदनाभपादारविंदविमुखात्श्वपचंवरिष्ठम् मन्येतदर्पितम-
नोवचनेहितार्थप्राणंपुनातिसकुलंनतुभूरिमानः भगवद्वाक्यम् नमेप्रियश्चतुर्वेदीमद्भक्तःश्वपचःप्रियः तस्मैदेयंत-
तोग्राह्यंसचपूज्योयथाह्यहम् मन्निमित्तकृतंपापंमद्धर्मायचकल्पते मामनादृत्यधर्मोपिपापंस्यान्मत्प्रभावतः मन्निमित्तकृ-
तंकर्मकर्मलोपोभवेद्यदि तत्कर्मकुरुतेनित्यंतिस्रःकोट्योमहर्षयः वर्णरूपाश्रमाचारसपूर्ववृत्तनिरूपणम् श्रीवैष्णवस्ययःकु-
र्यात्समहापापसंज्ञकः म्लेंछतुल्याःकुलीनास्तेयेनभक्ताजनार्दने संकीर्णयोनयःपूतायेभक्तामधुसूदने नवमेभगवद्वच ३०
नम् अहंभक्तपराधीनोह्यस्वतंत्रइवद्विज साधुभिर्ग्रस्तहृदयोभक्तैर्भक्तजनप्रियः महाभारते तुलसीदलमात्रे

णजलस्यचुलकेनच विक्रीणीतेस्वमात्मानंभक्तेभ्योभक्तवत्सलः ऋषभदेववचनम् नह्यंम्मयानितीर्थानिनदेवा-
मृच्छिलामयाः तेपुनंत्युरुकालेनदर्शनादेवसाधवः साधवोन्यासिनःशांताब्रह्मिष्ठालोकपावनाः हरंत्यघंतेंगसंगात्तेषास्ते-
ह्यघभिद्धरिः साधवोहृदयंमह्यंसाधूनांहृदयंत्वहम् मदन्यंतेनजानंतिनाहंतेभ्योमनागपि वाराहे जाह्नव्यादीनि-
तीर्थानिपापनिष्कृतिहेतवे कांक्षंतिहरिदासानांस्पर्शनंहरिदासवत् निवसंतिमहात्मानोयत्रचैकांतिनोद्विजाः देवादेवर्षयोनि
त्यंतद्देशंपर्युपासते यत्रभागवतानित्यंपंचकालपरायणाः निवसंतिसदायुक्ताःतत्क्षेत्रंनैमिषंविदुः मद्भक्तजनसंमर्दपादप
शुविसर्जनात् चतुःसागरपर्यंतंपावनंस्याद्वसुंधरे भागवते आसामहोचरणरेणुजुषामहंस्यांवृंदावनेकिमपिगु
ल्मलतौषधीनाम् यादुस्त्यजंस्वजनमार्यपथंचहित्वाभेजुर्मुकुंदपदवींश्रुतिभिर्विमृग्याम् महाभागवतायत्रवसंतिविमला-
शयाः तद्देशंमंगलंप्रोक्तंयथाविष्णुपदंशुभम् निमिषंनिमिषार्द्धंवायत्रतिष्ठंतिवैष्णवाः तदेवपरमंस्थानंतत्तीर्थंतत्तपोव-
नम् निरपेक्षंमुनिंशांतंनिर्वैरंसमदर्शनम् अनुव्रजाम्यहंनित्यंपूयेयेत्यंघ्रिरेणुभिः वराहपुराणे रथ्यांतरेमूत्रपुरी-
षमध्येचांडालवेश्मन्यथवास्मशाने कृतप्रयत्नोप्यकृतप्रयत्नोदेहावसानेलभतेचमोक्षम् नयामिपरमंस्थानंअर्चिरादिग-
तिंविना गरुडस्कंधमारोप्ययथेष्टमनिवारितम् वैष्णवःपरमोधर्मः वैष्णवःपरमंतपः वैष्णवःपरमाराध्योवैष्णवःपरमा-
गतिः मद्भक्तंश्वपचंवापिनिंदांकुर्वंतियेनराः पद्मकोटिशतेनापिनक्षमामिवसुंधरे याप्रीतिर्मयिसंवृत्तामद्भक्तेषुसदास्तु

ते अवमानक्रियातेषांसंहरत्यखिलंशुभम् अभाचारान्दुराचारानज्ञानान्हीनजन्मनः मद्भक्तान्श्रोत्रियोनिंदन्सद्यश्चांडालतां
व्रजेत् ब्रह्मांडेब्रह्मोवाच नाहंविशंके ऽसुरराजवज्रान्नत्र्यक्षशूलान्नयमस्यदंडात् नाग्न्यर्कसोमानिलवित्तपास्त्रैः शं
केभृशंब्रह्मविदोवमानात् दारुचर्मणिनिःश्वासः दहतेलोहपंचकम् साधुसज्जनसंतापः क्रिमाश्चर्यंकुलक्षयम् स्कंदे
यमवाक्य दुराचारोदुष्कुलोपिसदापापरतोपिवा भवद्भिःसर्वथात्याज्योविष्णुंचभजतेनरः नब्रह्मानशिवाग्नींद्रानाः
हमन्येदिधीकसः नशक्तानिग्रहंकर्तुंवैष्णवानांमहात्मनां वैष्णवाविष्णुवत्पूज्यामममान्याविशेषतः तेषांहृतेवमानेतुवि
नाशोजायतेध्रुवम् ब्रह्मलोकेनतेवासोनतेवासोहरालये नालयेलोकपालानांवैष्णवानांपराभवे तथाचविष्णु
पुराणेयमवाक्यम् स्वपुरुषमभिवीक्ष्यपाशहस्तंजपतियमःकिलतस्यकर्णमूले परिहरमधुसूदनप्रपन्नान्प्रभुरह
मन्यनृणामवैष्णवानाम् श्रीभागवतेषष्ठेयमवाक्यम् जिह्वानवक्तिभगवद्गुणनामधेयंचेतश्चनस्मरतितच्चर
णारविंदम् कृष्णायनोनमतियच्छिरएकदापितानानयध्वमसतोऽकृतविष्णुकृत्यान् भार्गवपुराणेयमवाक्यम् दू
षयेद्भगवद्भक्तंयस्तुवाक्यैर्नराधमः मूको भवतिजन्मानिसहस्राणिशतानिसः यस्तुदृष्ट्वाहरेर्भक्तमनुत्थायस्थितोयदि पा
षाणत्वमवाप्नोतिचिरकालंसमानवः विष्णुभक्तान्द्विजान्यस्तुमर्त्यभावेनमन्यते ससहस्राणिजन्मानितिर्यग्योनिषुजायते
अनधीतोहरेर्भक्तःस्वधीताद्द्विजपुंगवात् भृशंश्रेष्ठतमोज्ञेयोभक्तिहीनोद्विजोवरः चिन्हितंशंखचक्राद्यैःश्वेतमृत्सिंडधारि-

णां तुलसीनलिनाक्षाणां दधानां मालिकाद्वयम् तेवैभागवताप्रोक्तानान्येवेदविदांवराः दृष्ट्वातान्पूजयेत्सम्यक् यथानारायणंप्रभुम्
येजनास्तान्प्रियान्विष्णोः पूजयंतिस्मरंत्यपि तत्प्रसादादघंतेषांसर्वंनश्यमभूद्ध्रुवम् यःपठेच्छृणुयाद्भक्त्या संदर्भमिदमुत्तमम् स-
र्वार्थसिद्धिंसंप्राप्यलभेदंतेपरंपदम् श्रीकृष्णनामार्यगुरोःप्रसादात्संदर्भमेतत्कृतमुत्तमंच भक्त्यानरोयःशृणुयात्पठेद्वा सोभा
ग्यवान्गच्छतितत्पदंसः इति सारसंग्रहे भागवताराधन कथनंसपूर्वकग्रंथः समाप्तः

श्रीमतेरामानुजायनमः श्रीमन्नारायणस्वामिन्शठकोपंप्रदेहिमे रामानुजंप्रदेहित्वंशठकोपमुनीश्वर १ प्रदेहिमेदाशरथिंरामा-
नुजदयानिधे भवाब्धौमज्जमानंमांकरुणाब्धेसमुद्धर २ त्वमेवमेपितामाताशरण्यश्चगुरुर्गतिः त्वांविनान्यागतिःस्वामिन् नहि-
कुत्रापिविद्यते ३ घोरेकलियुगेह्यस्मिन्सर्वधर्मविवर्जिते संसारतरणोपायोनान्यस्त्वच्चरणात्प्रभो ४ ततोनन्यगतिंदीनंदीनबंधो
दयार्णव पाहिमांपापिनंघोरंरामानुजजगद्गुरो ५ संसारतापसंदग्धशीतहेतुविवर्जितः रामानुजपदांभोजच्छायाविश्राममाश्र-
ये ६ सर्वमंगलमांगल्यंसर्वोपद्रवनाशनम् वंदेरामानुजार्यस्यनित्यंपादांबुजद्वयम् ७ केचित्कर्मादियोगेषुविद्वांसोविरता-
जनाः वयन्तुयतिराजस्यपादपद्मैकसंश्रयाः ८ भोगैश्वर्यपराःकेचित्केचित्कैवल्यमीप्सवः वयंतुशृंखलाछिन्नारामानुज
दयानिधे ९ त्वत्पादांभोजमाश्रित्य निखिलोपायवर्जिताः तरिष्यामोजसानूनमृत्युसंसारसागरम् नमोस्तुसर्वार्तिविनाशहे

नवेत्यनंतपापेंधनदावकीलिने निजाश्रितानांभवसिंधुसेतवे यतींद्रपादांबुजकामधेनवे ११ अखिलदुरितपुंजध्वंसनंदेहभाजां सं·
भवजलधिनिपोतंपावनंपावनानाम् परमपुरुषधामप्रापकंस्वाश्रितानां यतिपतिपदपद्मंश्रेयसेसंश्रयामि १२ नमामिरामा·
नुजपादपंकजंवदामिरामानुजनामनिर्मलम् स्मरामिरामानुजदिव्यविग्रहंकरोमिरामानुजदासदास्यताम् १३ रामानुजस्यप
दपंकजमाश्रयामिरामानुजस्यकरुणामनुसंदधामि रामानुजस्यजनपादरजोवहामिरामानुजायनमइत्यनिशंवदामि १४
बोधांधकारपरिहारदिवाकराय श्रीवैष्णवांबुनिधिपूर्णनिशाकराय अद्वैतवादिकरियथमगाधिपाय तस्मैनमोस्तुसततं
यतिपुंगवाय १५ लोकानुद्धर्तुकामोधृतमनुजवपुर्भूतलेयोवतीर्णोनिर्जित्याशेषदुष्टान्कुमतिमतपरान्वेष्णवंधर्मतेने भ·
क्तेशानाद्यलभ्यंनिखिलपतिपदंदत्तवान्स्वाश्रितानांश्रीमान्रामानुजोनोभवभुजगमुखात्त्रातुनित्यंदयालुः १६ छं
दतोटक स्वपादांबुजसंश्रितपापहरंसकलश्रुतिसारयथार्थकरम् जयनादिविनाशनदण्डधरंप्रणमामियतीश्वरमा·
दिगुरुम् १७ प्रकटीकृतमाधवभक्तिपथंकलिपातकमोचनपुण्यकथम् परिभूतनिरीश्वरवादिमतंयतिराजगुरुंप्रणमे·
शिरसा १८ कृमिकण्ठनरेशनिषूदकरंभवरोगविनाशनवैद्यवरम् शरणागतवत्सलवारिनिधिंप्रणमामिसदायतिभूमि
पतिम् १९ नमोरामानुजार्यायकल्याणगुणसिन्धवे कृपामात्रप्रसन्नायदीननिर्व्याजबंधवे २० प्रथमोनंतरूपश्चद्वितीयोल· ३२
क्ष्मणस्तथा तृतीयोबलरामश्चकलौरामानुजोमुनिः द्वापरांतेकलेरादौपाषंडप्रचुरेजने रामानुजेतिभविताविष्णुधर्मप्रव·

र्तकः २२ सर्वलोकसमुद्धर्त्रे कुमिकंठविनाशिने नारायणप्रतिष्ठात्रे प्रपन्नस्कंरसाक्षिणे २३ त्रिदंडहस्तंसितयज्ञसूत्रंकाषाय
वस्त्रंलसदूर्ध्वपुंड्रम् रथांगशंखांकितबाहुमूलं रामानुजार्यंशरणंप्रपद्ये २५ इतिश्रीब्रह्मसंहितायांरामानुजवैभवस्तोत्रंस
पूर्णम् ॥ ६ ॥ ॥श्रीमतेरामानुजायनमः पाषंडद्रुमषंडदावदहनश्चार्वाकशैलाशनिर्बौद्धध्वांतनिरासवासरपति-
र्जैनेभकंठीरवः मायावादिभुजंगभंगगरुडस्त्रैविद्यचूडामणिः श्रीरंगेशजयध्वजोविजयतेरामानुजोयंमुनिः १ पाषंड षंड-
गिरिखंडनवज्रदंडाः प्रच्छन्नबौद्धमकरालयमंथदंडाः वेदार्थसारसुखदर्शनदीपदंडा रामानुजस्यविलसंतुमुनेस्त्रिदंडाः २
चारित्रोद्धारदंडंचतुरनयपथालंक्रियाकेतुदंडंसद्विद्यादीपदंडंसकलकलिकथासंहृतेकालदंडं त्रय्यंतालंबदंडंत्रिभुवनवि-
जयच्छत्रसौवर्णदंडंधत्तेरामानुजार्यःप्रतिपथिकशिरोवज्रदंडंत्रिदंडं ३ त्रय्यामांगल्यसूत्रंत्रिफणगयकगपथारोहणालंबसूत्रंस
द्विद्यायंत्रसूत्रंसगुणनयपथासंपदांहारसूत्रं प्रज्ञासूत्रंबुधानांप्रशमधनमनःपद्मिनीनालसूत्रंरक्षासूत्रंयतीनांजयतियतिपतेर्वक्षसिब्रह्मसूत्रम् ४ पाषंडसागरमहाबडवामुखाग्निःश्रीरंगराजचरणांबुजमूलदासः श्रीविष्णुलोकमणिमंडपमार्गदायी
रामानुजोविजयतेयतिराजराजः ५ इतिश्रीघाटीपंचकंसमाप्तम् श्रीमच्छठारिदासेनदीनबंधुकृतेनवै गौडेन-
शीकरस्थेनशोधितःसारसंग्रहः १ श्रीभार्गवपुरस्थेनभरद्वाजकुलेनवै लक्ष्मीनारायणेनायंमुदितोदृषदक्षरैः २

इति श्रीनारायणसारसंग्रहः समाप्तः ॥